अथ कदाचिद् अनुपमयश[1]श्चन्द्रिकाह्लादितहरित्कुवलयस्य कविलोककुलैकभागधेयस्य साधुजनविधेयस्य तस्य गर्भधारक-नृपालस्य गुणगणानाकर्ण्य गोलकुण्डाभिधानात् पुटभेदनाद् अष्टौ परमेष्ठिन इव लसद्वाणीविलासाञ्चितवदनारविन्दाः बृन्दारकाभि-नन्द्यमानगुरुकाव्यकृतिमहनीयाः कमनीयाकृतयः कविकुमुदादयः कवयः शिष्यसहस्रैः अयननगरमुपाजग्मुः ॥

पुरं तदागत्य विपश्चितस्ते प्रकीर्णशालौ ददृशुस्तमेतम्[2] ।
खले वसन्तं विचयैकतानं केनापि संसूचिततत्स्वरूपाः ॥ ३ ॥

मादृशां किमिह दास्यति योऽसौ ईदृशस्तदपि कीर्तिरुदारा ।
श्रूयते भुवि पुनः शुभवाग्भिः वर्धयाम इति तं प्रतिजग्मुः ॥ ४ ॥

1. P. वितरणयशः 2. M. ददृशुरेनं विनिकीर्णशालौ ।

संस्कृतटीका

गुरुणो बृहतः काव्यस्य कृतिः, तया महनीयाः । परमेष्ठिपक्षे बृन्दारका देवाः तैरभिनन्द्यमाना, बृहतः लोकरूपकाव्यस्य कृतिः सृष्टिः तया महनीयः । स्रष्टुर्ब्रह्मणोऽपि कवित्वात् लोकस्याऽपि काव्यत्वम् । कमनीयाकृतयः शोभनतनवः इति कविपक्षे । कमन इति ब्रह्मण एम नामान्तरम् । 'कुमुद' इति नाद्यावधि कोऽपि कविरान्ध्रसाहित्यविज्ञानां कर्णपथमवतीर्णः ॥ पुरमिति । खलः शालिस्तंबेभ्यः धान्यसंग्रहार्थः क्षेत्रैकदेशः । तत्र विकीर्ण-धान्यसंचयव्यग्रं तम् 'अयं स गर्भधारक' इति कैरपि संसूचितगर्भधारक-स्वरूपास्तं ददृशुः ॥ ३ ॥ 'एवं खले शालिकणान् यो विचिनोति दरिद्रवत्, स किं नो दास्यति' इति निर्विण्णा अपि तत्कीर्तिं श्रद्दधानाः तमुपससृपुः ॥४॥

तानिङ्गितज्ञो रभसाद्विकसन्मुखपङ्कजः ।
निनाय मन्दिरं श्रीमन्निजमिन्द्रगृहोपमम् ॥ ५ ॥

अनन्तरं भर्मविनिर्मितश्रीपीठेषु हर्षेण कृतासनेभ्यः ।
अदात् कविभ्यः स वितत्य राशीन् सौवर्णपात्राणि महाधनानाम्[1] ॥

एतदवेक्ष्य समक्षं विलक्षाशयतया नासाञ्चलविनिहितशयान् एतान् सावहित्थमित्थं वचनमुत्थपायामास ॥

केदारभूमिषु खले वलजान्* पुपूष-
द्भृत्यैर्विकीर्णमभितः पृथगेकमेकम् ।
व्रीहिं विचिन्वति परं मयि भोः कवीन्द्राः
क्षुद्रोऽयमित्यजनि धीर्हृदि भूयसी वः ॥ ७ ॥

1. P. पृथग्धनानाम् ।

को. टि.

* P. वलजाः களபட்டடை.

संस्कर्तुष्टीका

तानिति । इङ्गित अन्तस्स्थभावसूचिकां चेष्टां जानातीति इङ्गितज्ञः ॥ ५ ॥ अनन्तरमिति । भर्म सुवर्णम् । महाधनानां राशीन् सौवर्णपात्राणि च अदात् ॥ ६ ॥ समक्षं प्रत्यक्षम् । विलक्षः विस्मितः । नासेति, नासाग्रन्यस्ताङ्गुलीन् । अवहित्थं आकारगोपनम् । स्वप्रभुत्वगोपनपरं सामान्यजनवत् कणविचयात्मकं यत्कर्म तद्विषयकं वचनमिति अर्थः ॥ केदारेति । वलजाः पलालाः तत्क्षोदभूतबुसं वा । तथा विवृतं कोशस्थद्राविडाटिप्पण्याम् । 'वलजं गोपुरे सस्ये' इति हेमचन्द्रः । 'धान्यराशिस्तु वलजा' इति वैजयन्ती । पुंलिङ्गप्रयोगो मृग्यः । 'वलजापुपूषद्भृत्यैः' इति समस्तपदपाठः साधीयान् भाति । पुपूषद्भृत्यैः तान् वलजान् पुपूषद्भिः पावयितुमिच्छद्भिः शोधयद्भिर्भृत्यैः ॥ ७ ॥

वित्तरत्नसहस्राणि धान्यानीति सतां वचः ।
प्रमाणं किल सर्वज्ञास्तस्मादेतत्कृतं मया ॥ ८ ॥

इत्युदीर्य स वितीर्य च सर्वं स्वापतेयमभिजातकुलेड्यः ।
गोगणैरचकलद्विकचानि[1] चन्द्रवत्कविमनःकुमुदानि ॥ ९ ॥

श्रीमद्भिः करटिवरैः क्षरन्मदोदैर्गन्धर्वैरधिकजवैः सवत्सगोभिः ।
प्राप्तार्चाःस्तुतिमुदिताशिषःकवीन्द्राश्चक्रुस्ते तदनु यशस्विनस्तुतस्य॥

तदनु ते कविकुमुदादयः प्रहर्षेण गर्भधारकयशांसि पृथक् पृथक् प्रशशंसुः ॥

श्रीस्त्वं राजसि सन्ततं प्रियतमा पत्युः समीपे स्थिता
नाहं प्राप्त[2]दिगन्तरालेवसति[3]र्धन्येति कीर्त्योदिते ।
मुग्धे नन्वयमन्वहं कृतरुचिस्त्वय्येव मां मन्यते
तूलायेति वचः श्रियः स जयति श्रीमान् कलाभृत्सुतः ॥

1. M. Gap here. 2. P. प्रान्त 3. M. corrupt here.

संस्कर्तुष्टीका

इतीति । स्वापतेयं वित्तम् । अभिजातकुलैः बुधसमूहैः ईड्यः स्तुत्यः । गोगणैः धेनुबृन्दैः किरणबृन्दैश्च ॥ ९ ॥ करटी गजः । गन्धर्वैः अश्वैः । स्तुतिमुदिताशिषः स्तुतीः समोदमाशिषश्च चक्रुः ॥ १० ॥

श्रीकीर्तिसंवादरूपो गर्भधारकप्रशस्तिः श्रीरिति । त्वमेव प्रभोः गर्भधारकस्य प्रियतमा यत्सन्ततं तत्समीप एव त्वं स्थिता, अहं पुनः सदा दिक्षु परिभ्रमामीति नायककीर्तेः नायकश्रियं प्रति उक्तिः । 'अयं परमार्थतः त्वय्येव बद्धभावः कीर्तिहेतोरेव मां श्रिय तूलाय मत्वा त्यजति, अर्थिभ्यो ददाति' इति श्रियः कीर्तिं प्रति प्रत्युक्तिः ॥११॥ श्रीमान्निति प्रशस्त्यन्तरम् ।

श्रीमन् गर्भसुबोधकुञ्जर भवद्दानं महीमण्डले
सारङ्गा विबुधालयः समधुरं पीत्वातिमोदान्विताः ।
नानादेशसमागताः श्रुतिसुखैराशामुखे सुन्दरैः
शब्दैः संप्रति वर्णयन्ति बहुधा त्वद्वैभवं हर्षतः ॥१२॥

वदान्यतावागुरिकां प्रसार्य वागीशवातायुगणान् क्षणेन ।
आकर्षतस्ते निखिलानिदानीम् अलुब्धभावोऽद्भुत ईड्यकीर्ते॥१३॥

त्वदीयकीर्तिः कमनीयमूर्तिः[1] श्रान्ता दिगन्तभ्रमणैरजस्रम् ।
श्रमं निराकर्तुमना इव स्वं स्वर्वाहिनीतोयमगाहतासौ ॥ १४ ॥

श्रीमन् गर्भसुबोधक क्षितिपते पूर्णो यशश्चन्द्रमाः
सर्वेषां सरसैर्मनांसि मृदुभिः संमोदयन् स्वैः करैः ।

---

1. P. कमनीयवृत्तिः

---

संस्कर्तुष्टीका

गर्भसुबोध इति पूर्वोक्तनिरुक्त्यनुसारेण गर्भ एव प्राप्तपरमात्मदर्शनस्य गर्भधारकस्यैव पर्यायः । स एव कुञ्जरो गजः । दानं प्रदानं मदजलं च । विबुधा एव अलयः भृङ्गाः विबुधालयः ॥१२॥ वदान्यतेति तृतीया प्रशस्तिः । वदान्यतावगुरिकां त्यागरूपजालम् । वागीशा बुधा एव वातायवो मृगाः । अलुब्धभावः लुब्धो व्याधः लोभी च । जालेन मृगान् गृह्णाति लुब्धको व्याधः, तादृशमेव कुर्वन् भवांस्तु अलुब्धः अलोभः ॥ १३ ॥ त्वदीयेति चतुर्थी स्तुतिः । स्वर्वाहिनी आकाशगङ्गा । तावद्दूरं गता कीर्तिरिति भावः ॥ १४ ॥ श्रीमन्निति स्तुत्यन्तरं तत्कीर्तिमेव चन्द्रतया वर्णयाति । कीर्तेः स्वच्छतया कीर्तिचन्द्रः कलङ्कं विनैव भाति । तस्य धवलिम्ना च ये

भाति स्त्रीयतनुप्रभाधवलितस्वर्गापगेन्दीवर-
भ्राम्यद्भंभरतारकावृतरथः कामं कलङ्कं विना ॥ १५ ॥
वदान्यमूर्धन्यमहीमहेन्द्र स्ववाहिनीफेननिराकरिष्णु ।
अश्रान्तविश्राणनजं यशस्ते दुकूललक्ष्मीं ककुभां विधत्ते ॥ १६ ॥

इति कृतनानाविधस्तुतिवचनविस्तारः कविजनवारः तद्वि-श्राणितैः महाधनैः महार्हैः वस्त्रैश्चतुर्विधैः कनककटकमकुट-केयूरमौक्तिकहारहीरकर्णिकाङ्गुलीयककलधौतकटिसूत्राद्यनेकाभरणैः आच्छादितो भूषितश्च, कल्पितसमुन्नतेषु सामजेषु लसल्ललामसन्ततिषु सतिषु घनगंभीरध्वनिषु स्यन्दनेष्वारूढः, गुरुतरपुष्कलनिष्कभर-नितान्तभुग्नकन्धराश्वतरक्रमेलकभद्रकवर्गः, अतन्द्रितैरन्तेवसद्भिः विष्टिभिश्चानुनीयमानबहुल*बहुलोत्करः,उपकरणव्युष्टिपरितुष्टान्तः-करणः, स्वीकृततदनुमतिः[1], अयनाभिधाननगराद् गोलकुण्डपुर-माधिगम्य तत्रत्याय नृपाय विदितात्मवृत्तान्ताय मकराङ्काभिधानाय यथावृत्तं वृत्तशालिनो वृत्तं निवेदयामास ॥

1. M. and P. wrongly अनुमितिः

को. टि.

* P. बहुला गावः

संस्कर्तुष्टीका

वियद्गङ्गापयोरूढेन्दीवरान्तर्भ्राम्यद्भृङ्गाः तेऽपि धौतानिजनीलवर्णाः तारका भूत्वा वियति राजन्ते इति भावः ॥ १५ ॥ वदान्येति अन्त्या प्रशस्तिः । स्ववाहिनीफेननिराकरिष्णु । कीर्तेः फेनस्य च धवलत्वादियमुक्तिः । विश्राणनं दानम् । ककुभां स्त्रियां दुकूलवासोभावं भजति ॥ १६ ॥ वारः समूहः । चतुर्विधैः आवेध्य-बन्धनीय-क्षेप्य-आरोप्यरूपैः । कर्णिका कर्णाभरणम् ।

आकर्ण्य सादरमनन्तरमाप्तवाचां वाचामगोचरतरामनघां स वाचाम्।
तस्याधरीकृतसुरद्रुगणस्य वृत्तिं राजा दिदृक्षुरभवन्मुदितान्तरात्मा ॥

विद्वद्वृन्दपनायितस्य विमले कीर्त्यायती क्ष्मापतिः
चित्तेऽनुक्षणमद्भुतैकवसतेः निध्याय बद्धादरः ।
प्रारेभे स लघु प्रसिद्धमथ तं स्फूर्तिं परां श्रीपते-
रानेतुं गुणकौस्तुभोज्ज्वलतनुं सर्वातिथिं वर्धनम् ॥ १८

संस्कृतटीका

कलधौतं हेम । कल्पितं कल्पना 'अम्बारी' इत्याद्यारोपणेन गजस्य सज्जीकरणम् । तेन समुन्नतेषु सामजेषु गजेषु । ललामम् अश्वभूषा । सप्तिषु अश्वेषु । निष्को हिरण्यम् । क्रमेलक उष्ट्रः । भद्रकाः वृषभाः । विष्टिभिः कर्मकरैः । बहुलाः बह्वयः । बहुलाः गावः । 'बहुलाः कृत्तिका गावः' इत्यमरः । तासामुत्करः समूहः यस्य सः । व्युष्टिः समृद्धिः । तदनुमतिः गर्भधारकानुमतिः । मकराङ्कः मकरलाञ्छनः, तुरुष्कराजः । तेषां तथाविधलाञ्छनस्य क्वचित् श्रूयमाणत्वात् ।। आकर्ण्येति । स राजा वाचामाकर्ण्येत्यन्वयः । वाचां वाचम्, 'यथा वाचा निशा दिशा' इति भागुरिमतेन टाबन्तत्वम् । तस्य गर्भधारकस्य । वाचामगोचरतरामनघां वृत्तिमिति अन्वयः । सुरद्रुगणस्य कल्पवृक्षगणस्य ॥ १७ ॥ विद्वादिति । पनायितस्य स्तुतस्य । आयतिः प्रभावः । 'स्यात् प्रभावेऽपि चायतिः' इत्यमरः । लघु शीघ्रम् । श्रीपतेः परां स्फूर्तिम् विष्णोराविर्भावभूतम् । विष्णुत्वान्वयश्च गुणकौस्तुभेत्यादिना । सर्वातिथिः सर्वैरभिगतः । वार्धिष्णुः वर्धनः ॥ १८ ॥ अनुयोगः प्रश्नः ॥ अनवरतान्नदानेति । छत्रपतिः राजेव निरन्तरान्नदातृत्वात्तथाभिधानं स्यात् । अथवा सत्त्रमिति भाषायाम् अन्नदानशालोच्यते । सत्त्रपतिरिति पाठः स्याद्; अथवा सत्त्रशब्दस्य द्राविड्यां छत्रेत्युच्चारणप्राप्तेः सत्त्रच्छत्रयोरत्र भाषाश्लेषः स्यात् ।

ततस्तेन मकराङ्केन सरभसमभिचोदितनिजामात्यैरभिसत्कृतः सबहुमानमाहूतः प्रत्युद्गम्याभिवन्दितः सदनमानाय्य सानन्दम् अर्धासनोपवेशितः तत्कृतकुशलानुयोगः चिरमभिष्टुतः कनककुसुमैरभिवृष्टः प्रहृष्टेन पाण्डरमातपत्रं चामरवालव्यजने चतुरङ्गिणीमनीकिनीमपि वितीर्य समर्यादम् अनवरतान्नदाननिरततया कृताभिधानः छत्रपतिरिति नदीमातृकैः देवमातृकैः त्रिशदसाधनानेककेदारकैः सग(गु ?)विष्टिभिः ग्रामैः अलंकृतां सीमां वेत्राभिधानं पुटभेदनमपि प्रदाय सुदूरमनुगतेनानुज्ञातः विज्ञशिरोमणिः अयननगरमेत्य संभावितः तत्रत्यैः पौरैः अनुगतसुहृत्समुदायः सकलत्रः सहस्रनेत्र इव सुमनस्स्तूयमानचरित्रः गोत्रालंकरणभूतं विचित्रतरं वेत्रपुरम् आसाद्य अनुरक्तप्रकृतिमण्डलः चिरं धर्मेण वसुमतीं पालयामास ॥

बभूवुस्तनयास्तस्मात् लक्ष्म्यां त्रेतासमौजसः ।
चोलयः प्रथमस्त्वन्यौ *उत्तरश्रीधराह्वयौ ॥ १९ ॥

---

को. टि.

* P. वडमलै तिरुमलै इति नामाङ्कितौ ।

---

संस्कृतटीका

नदीमातृकैः नद्यम्बुपोषितैः । देवमातृकैः वृष्ट्यम्बुपोषितैः । त्रिशदेति, शदः क्षेत्रभोगः । त्रिवारं व्रीह्युत्पादनानुकूलैः अनेकैः केदारकैः । गोभिः विष्टिभिः भृत्यैश्च सहितैः । सीमां प्रदेशम् । वेत्राभिधानं पुटभेदनम् अद्य मद्रनगरैकदेशभूतं द्राविडभाषायां 'पेरम्बूर्' इति ख्यातम् । सुमनसः बुधा विबुधाश्च ॥ बभूवुरिति । उत्तरधरः 'वडमलै' इति द्रविडनामाङ्कितः । तथा श्रीधरः 'तिरुमलै' इति । उभयमपि वेङ्कटगिरेर्नामभूतम् ॥ १९ ॥

अलमेलुमङ्गनाम्नीम् उपयेमे चोलयाख्यनृपवर्यः ।
अजनि तयोः सुकुमारः बोम्मयनामा कुमार इव शिवयोः ॥
जनयति पाणिगृहीती बोम्मयनृपतेः स्म दारकद्वितयम् ।
निर्जितदस्रं पत्या नयनाभिख्या क्रमेण समनाम ॥ २१ ॥
अथ बोम्मयस्य तनयेन नगरमयनं गरीयसा ।
स्फीतमधिजन[1]युतं ह्युषितमनुजस्तु वेत्रपुर एव सोऽवसत् ॥
षडजायन्त तनयाः तस्य बोम्मयभूभुजः ।
वसन्ताद्याः सुमनसाम् आमोदाय यथर्तवः ॥ २३ ॥
बोम्मयो नयनः कृष्णो वर्धमानश्च नामभिः ।
मण्डिताः पुण्डरीकाक्षाः रामो लक्ष्मण इत्यपि ॥ २४ ॥
विदुषी बभूव सहजेन मदनवनितेव सुन्दरी ।
जामिरकवसुगुणाननु तान् प्रथिता च मङ्गलवतीति नामतः ॥
अरिजनदमनो नयनो धिष्ण्यं कृष्णस्तु सम्पदुत्पत्तेः ।
अभिवृद्धमानवल्लीसदुपघ्नः र्हि वर्धमाननृपः ॥ २६ ॥

1. M. आतिथिजन

संस्कर्तुष्टीका

अलमेलुमङ्गा पद्मासनस्था देवी पद्मा । वेङ्कटाचलपतेर्देव्या नामेदम् ॥ २० ॥ पाणिगृहीती भार्या । दस्रौ आश्विनौ । पत्या समनाम दारकद्वितयमिति अन्वयः । पतिः बोम्मयः पिता; दारकौ पेद्द(ज्येष्ठ) बोम्मय, चिन्न (कनिष्ठ) बोम्मयेति पितुरेव नाम दधानौ । 'नयना' इति मातुर्नाम ॥ २१ ॥ गरीयसा तनयेन पेद्द(ज्येष्ठ)बोम्मयेन । उद्गता वृत्तम्; तृतीयपादान्ते तु लघुरयुक्तः ॥ २२ ॥ ॥ २३ ॥ २४ ॥ मदनवनिता रतिः । जामिः पुत्री । अकवा उदाराः सुगुणा येषां ते तान् । उद्गता वृत्तम् ॥ २५ ॥

स्फीतपुण्यजनदानदक्षिणौ धार्मिकौ मिलितमित्रसंभवौ ।
तौ महाबलसमुद्भवादृतौ रेजतुर्भुवि हि रामलक्ष्मणौ* ॥ २७ ॥

अधिगतगुणकोटिं स्थूललक्ष्यैकदृष्टि
प्रसरदलघुवेगैर्मार्गणैर्नित्ययुक्तम्[1] ।
उपचितकरवृत्ति[2] श्रीपतेः शार्ङ्गमुर्व्या-
मजनि महितकीर्तिः बोम्मयक्षोणिपालः* ॥ २८ ॥

---

1. M. P. युक्तः 2. M. वृत्तिः

---

को. टि.

* P. श्लिष्टम् । * P. श्लिष्टम् ।

---

संस्कर्तुष्टीका

धिष्ण्यं वासगृहम् । मानरूपलतायाः उपघ्नः आरोहानुकूलाश्रयभूत-वृक्षः ॥ २६ ॥ स्फीतेति । पुण्यकृद्भ्यो जनेभ्यो दाने दक्षिणौ प्रकृतो भ्रातरौ । दाशरथी रामलक्ष्मणौ तु पुण्यजनानां यातुधानानां दाने खण्डने दक्षिणौ समर्थौ । मिलितानां मित्राणां संभवः सङ्गः ययोस्तौ इति प्रकृत-भ्रातृपक्षे । अन्यत्र मिलितः मित्रसंभवः सूर्यपुत्रो वाली याभ्यां तौ इति । महाबलोदयेन हेतुना आदृतौ बहुमतौ । महाबलो वायुः तत्संभवो हनुमान, तेन आदृतौ दाशरथी ॥ २७ ॥ अधिगतेति । अत्र श्रीपतिशार्ङ्गस्य अवतारतया षण्णां ज्येष्ठो बोम्मयो वर्ण्यते । अधिगतौ गुणः ज्याकोटी च येन तत् शार्ङ्गम् । बोम्मयपक्षे गुणकोटिः कोटिसंख्याका गुणाः । बोम्मय-पक्षे स्थूललक्ष्यः वदान्यः । मार्गणाः याचकाः बाणाश्च । उपचिता करे वृत्तिः वर्तनामिति शार्ङ्गपक्षे । अन्यत्र कररूपा वृत्तिः अधीनैः समर्पिता बलिरूपा वृत्तिः ॥ २८ ॥ महौजसीति । प्रत्यर्थिनः शत्रवः भूयः यवसानां तृणानाम् अदनं भक्षणं चक्रुः । अर्थिनः प्रहर्षाद् यवानां सादनानि चक्रुः । यवसा-

महौजसि श्रीमति बोम्मयेन्द्रे प्रशासति क्षोणितलं वदान्ये ।
प्रत्यर्थिनश्चक्रुरथार्थिनश्च भूयः प्रहर्षाद्यवसादनानि* ॥ २९ ॥

वृषाकपायीव शशाङ्कमौलेः रामानुजा विश्रुतगोत्रजाता ।
बभूव भार्या वसुधाधिपस्य सारङ्गकन्या खलु *धर्ममूर्तेः ॥३०

स तां प्राप्य महातेजाः रोहिणीमिव चन्द्रमाः ।
रेजे कुवलयामोदं कलाभिः कलयन्नृपः ॥ ३१ ॥

तस्य च तादृशमहिमोपचितस्य अनुरूपेषु दारेषु उदारगुणौ दुर्विनीतखलिनीदर्पमहीध्रटंकायमानौ विशिष्टजनविरोधिकण्टकोद्धरणमनसा विष्टरश्रवसा आज्ञप्तयोः पाञ्चजन्यसुदर्शनयोः आविर्भूततेजसौ महौजसौ अभिरूपौ प्राप्तरूपावश्विनेयाविव अविनाभूतौ वेङ्कटश्रीवेङ्कटाख्यौ बभूवतुः ॥

को. टि.

* P. श्लिष्टम् । * P. धर्मो धनुः ।

संस्कर्तुष्टीका

दनं नाम यवस्थापनं इष्टिषु अङ्गभूतं कर्म । अर्थिनो ब्राह्मणा यागांश्चक्रुरिति भावः ॥ २९ ॥ वृषाकपायी पार्वती । 'सारङ्ग' इति रामानुजायाः बोम्यजायायाः पितुर्नाम । धर्ममूर्तेः, धर्मस्य अत्र धनुरप्यर्थः, धनुर्मूर्तेः, शार्ङ्गावतारत्वाद् बोम्मयस्य । ' धमः...ना धनुर्यमसोमभे ' इति मेदिनी ॥ ३० ॥ खलिनी खलसंहतिः । विष्टरश्रवसा विष्णुना । पाञ्चजन्यः सुदर्शनश्च विष्णोः शङ्खः चक्रं च । बोम्मयस्य शार्ङ्गावतारतया मतस्य तनयो वेङ्कटतिरुवेङ्कटौ पाञ्चजन्यसुदर्शनावतारतया मतौ । कनीयसः तिरुवेङ्कटस्य पुत्रः कथानायक आनन्दरङ्गः विष्णोरेव अवतारतया मतः ।

प्रासूत भोजकनृपालसुतेव भद्रां
भद्रामशेषयुवतीषु सतीवरेण्या ।
मङ्गेति नाम तनयामथ बोम्मयेन्द्र-
पत्नी निजात्मजसुहृद्विजयानुकूलाम् *॥३२॥

तत्र वेङ्कटनृपो बहुलश्रीः श्रीधरातिशयभासुरमूर्तिः ।
आत्मभूरिव रतीमुपयेमे भामिनीं सुकृतमौक्तिकसंज्ञाम् ॥ ३३ ॥

आसन् वेङ्कटपत्न्यां श्रीधरगोविन्दवेङ्कटाभिख्याः ।
तनया मदनाभिख्याः सन्ततदातेः सुरद्रुकृतसख्याः ॥ ३४ ॥

आसंस्तिरुमलनृपतेः कीर्तिश्रीह्रिय इवातिललिताङ्ग्यः ।
पत्न्यः सज्जनबृन्दश्लाघितविमलतरसम्मतानूकाः ॥ ३५ ॥

---

को. टि.

*P. श्लिष्टम् ।

---

संस्कृतटीका

प्रासूतेति । भोजकनृपालसुता देवकी । भद्रां सुभद्राम् । भद्रां श्रेष्ठाम् । निजेति । सुभद्रापक्षे निजात्मजः देवक्या आत्मजः कृष्णः, तस्य सुहृद्भूतो विजयः अर्जुनः तस्य अनुकूलाम् । तद्वदेव निजात्मजयोः वेङ्कटतिरुवेङ्कटयोः कोऽपि सुहृद् विजयाख्यः, तस्मै मङ्गेयं दत्तेति श्लेषबलादनुमातुं शक्यम् । अथवा सामान्यत इष्टबन्धुजनवृद्धिकरीमित्यर्थः ॥ ३२ ॥ तत्रेति । श्रीधरः विष्णुः । आत्मभूः मन्मथः । सुकृतमौक्तिसंज्ञाम् "नल्लमुत्तु" इति द्राविड्यां ख्याताम् ॥ ३३ ॥ आसन्निति । अभिख्या कान्तिः । सन्तता दातिः दानं यस्य तस्य ॥ ३४ ॥ आसन्निति । तिरुमलः कनीयान् बोम्मयात्मजः तिरुवेङ्कटः । 'अनूकं तु कुले शीले' इति मेदिनी ॥३५॥

कनकरुचिः कनकाम्बा सद्गुणसन्तानभूषिता ताना ।
उज्ज्वलगुणनिकुरुम्बा सज्ञकरदृगङ्घ्रिकरतलाम्बेति ॥ ३६ ॥

उदभूत् सुनीतिशरणं तनयो वरवेङ्कटाचल इति प्रथितः ।
सशरीरमारसदृशः सुदृशामथ तानयोषिति मनोज्ञवपुः* ॥ ३७ ॥

अजनि दुहितृरत्नद्वयी भार्ययोः निरुपमगुणधामश्रियोरन्ययोः ।
अहिमकिरणपत्न्योस्सुतावत् क्रमादुपचयमुपयाता हि तेजस्विनी* ॥

गोविन्दनृपतेस्तिस्रो योषितः प्रथमासुतः ।
रङ्गस्वाम्यन्ययोर्धन्ये कन्ये द्वे संबभूवतुः ॥ ३९ ॥

शूरः सुदर्शनवपुः तिरुवेङ्कटेन्द्रः
सीमातिलङ्घिमहिमा स हिमाद्रिसारः ।
गाम्भीर्यवार्धिरथ बोम्मयराजसूनु-
स्त्राणाय तत्र हि सतां ववृधेऽचिरेण* ॥ ४० ॥

---

को. टि.

* M. प्रमिताक्षरा वृत्तम् । * M. प्रभा वृत्तम् ।
* P. चक्रावतारोऽयम् ।

---

संस्कर्तुष्टीका

सज्ञेति । सज्ञं जलजम् । 'सत् त्रिषु । सत्ये साधौ'.......इत्यारभ्य 'परब्रह्मणि नीरे च वयं ब्रूमो नपुंसकम्' इति केशवस्वामी । पद्मसदृश-करनेत्रपादा करतलम्बा इत्यर्थः ॥ ३६ ॥ ३७ ॥ अजनीति । अहिमकिरणः सूर्यः तस्य पत्न्यौ छाया संज्ञा च । तस्य सुतासु एका प्रसिद्धा यमुना; तपती, गोदावरी, विद्युदितीमा अपि सूर्यपुत्रीत्वेन कथिताः ॥ ३८ ॥ ३९ ॥ शूर इति । सुदर्शनवपुः चक्रात्मकः ॥ ४० ॥ 'सौन्दर्यसारसमुदाय-

स खलु पुनः क्रमेण समुन्मीलदनुपमललिततरुणिमसमुन्मेषाञ्चिताक्षः, विकचारुणतामरसदलायताक्षः, इक्षुकोदण्ड इव सौन्दर्यसारसमुदायनिकेतनतया रमणीयस्त्रैणस्पृहणीयमहनीयमधुरतराकृतिः, निराकृतवृषपुण्डरीकस्तम्बेरमहर्यक्षमदचंक्रमविलासः बिलासाधिपभोगोपमचण्डभुजदण्डः, उद्दण्डरिपुजनमण्डलीखण्डनपटुतरशितकठोरकरालकरवालः, अधिगतसकलविषयभाषापरिशीलनप्रावीण्यपदाभिषिक्तमूर्धन्यः, धन्यतमराजन्य[1]सभोचितोक्तिप्रत्युक्तिकाचतुरः, स्वाश्रवदाक्षिण्यकृपौदार्यदमकञ्चुकिपरिरक्षितचतुरुदधिपरिखावृतवसुधातलशुद्धान्तवासितकीर्तिदारः, सन्तततन्तन्यमानन्यायसरणिभिः उदितोच्छ्रितगोपायितायतिकः [2]लोकायतिकगोष्ठीनिराकरणोन्मुखान्तरः, [3]सांदृष्टिकोदर्कयोः दत्तैकदृष्टिः, इष्टतातिर्विधेयानाम्, अनिष्टतातिर्दुर्विनीतानाम्, अनवरतम् अतिथिलोकवशीकृतवाजिनीको रोहितवाजिनीकाशोग्रतरप्रतापभासुरो भूसुरैककामधुक्, पुरुषोत्तम इव इलापतिः, रत्नसानुरिव अनन्तकल्याणशेवधिः, विधुरिव सुधोपचितः

---

1. M. and P. सदो 2.3. M. both bits are corrupt.

---

संस्कर्तुष्टीका

निकेतन' इत्येतद्भवभूतेर्मालतीमाधवादुपजीवितम् । स्त्रैणं स्त्रीसमूहः । निराकृतेति । वृषो धर्मः, स एव पुण्डरीकं पद्मम् । निराकृतं तत् येन स स्तम्बेरमो हस्ती, तस्य हर्यक्षः सिंहः । तस्येव मदवद्गतिविलासो यस्य सः । बिलासाधिपः बिले आसत इति बिलासाः सर्पाः । तेषामधिपः शेषः। भोगः शरीरम् । करवालः असिः । सकलविषयभाषाः सकलदेशभाषाः,

कलानिधिश्च, जयन्त इव अभिवन्दितहरिचरणारविन्दः, पुरन्दर इव सुधर्मानुरक्तमनाः सुमनःप्रियश्च, सर्वसुहृदपि प्रकटितविश्वंभरारिभावः, धर्मभूरपि अनभिमतभीमनरवार्तः, सन्ततयोगशीलोऽपि

---

संस्कर्तुष्टीका

प्रेश्च्, इङ्ग्लीष्, डच्च् इत्यादिकाः। स्वाश्रवाः स्वकिंकरीभूताः दाक्षिण्य-कृपा-औदार्य-दमाख्यगुणरूपाः कञ्चुकिनः अन्तःपुररक्षिणः। कीर्तिरूपा दाराः यस्य सः। न्यायसरणिभिः न्यायमार्गैः उदिता उच्छ्रिता उन्नता, गोपायिता संरक्षिता, आयतिः यस्य सः। 'उत्तरः काल आयतिः'। न्याय्यत्वं विना उदयः उन्नतिः, सरक्षणं वा आयतेरसुलभमित्येवमुक्तिः। लोकायतिकाः 'ऋण कृत्वा घृतं पिबेद्' इति वादिनः। तद्गोष्ठीनिराकरण-प्रवणहृदयः। सांदृष्टिकं दृष्टफलम्। 'उदर्कः फलमुत्तरम्'। इष्टतातिः इष्टकरः। अतिथिलोकत्राकृता "देये त्रा" च इति पाणिनिसूत्रम्। अतिथिलोकाधीना कृता वाजिनी वाजमन्नमस्य अस्तीति वाजिनी महानसं येन सः। रोहितवाजी लोहिताश्वोऽग्निः। इला भूमिः। रत्नसानुः मेरुः। कल्याणं मङ्गलं सुवर्णं च। सुधा अमृतं शोभनबुद्धिश्च, तत्समृद्धः। हरिर्विष्णुरिन्द्रश्च। सुधर्मा देवसभा, शोभनाः धर्मा शोभनधर्मकृतो वा। सुमनसो बुधा विबुधाश्च। सर्वसुहृदपि प्रकटितो विश्वंभरायाः पृथ्व्या अरिभावः शत्रुभावः येन स इति विरोधः। अथवा सर्वसुहृद् विष्णुः, तस्य विश्वंभरस्य प्रकटितः शत्रुभाव इति विरोधः। अथवा सर्वस्य विष्णोस्सुहृद् भक्तोऽपि प्रकटित-विष्णुशत्रुभावः। विश्वंभरो विष्णुः तस्य आरि, अराः अस्मिन् सन्तीति चक्रं, तस्य भावः प्रकटितो येन स इति विरोधपरिहारः। तिरुवेङ्कटस्य चक्रावतारत्वोक्तेः। धर्मभूरपि युधिष्ठिरोऽपि अनभिमता भीमस्य नरस्य अर्जुनस्य च वार्ता यस्य स इति विरोधः। परिहारस्तु धार्मिकः अनभिमता भीमनराणां दारुणस्वभावानां नराणां वार्ता यस्य स इति। योगी सन्नपि विषयीति

अभिनवविषयाभिलाषी, वाचस्पतिरपि तिरस्कृतगोत्रघ्नसमुदयः पुरस्कृतकाव्यकथः, चिरं महेन्द्र इव त्रिविष्टपं वेत्रपुरम् अध्यवसत् ॥

यत्र क्षमां रक्षति शिक्षितारौ कलङ्कशङ्का तु शशाङ्कबिम्बे ।
विधुन्तुदेऽभूत् द्विजराजपीडा गन्धद्विपेष्वन्दुकबन्धनानि ॥ ४१ ॥

चोलयार्यतनयां विनयाढ्यां हेलया जितलसत्कलहंसीम् ।
संमतामुदवहत् स्थिरतरां श्रीवेङ्कटेन्द्रतनयः किल लक्ष्मीम् ॥ ४२ ॥

अधिगम्य स तां महोज्ज्वलाम् अधिकं पुष्यति च स्म हि श्रियम् ।
खगकेतुरिव श्रियं पुरा महितां मन्मथसुन्दराकृतिः ॥ ४३ ॥

---

संस्कर्तुष्टीका

विरोधः । परिहारे योगः ज्योतिश्शास्त्रोक्तः भाग्ययोगः, उद्योगो वा । अभिनवविषयाभिलाषी नूतनवस्तूनां नूतनदेशानां वा अभिलाषोऽस्यास्तीति ॥ वाचस्पतिः वाग्मी सुरगुरुश्च । गोत्रघ्नाः कुलकुठाराः, पर्वतभेत्ता इन्द्रश्च । काव्यं साहित्यम्, काव्यो दैत्यगुरुः ॥ यत्रेति । कलङ्कः लाञ्छन दोषश्च । विधुतुदः राहुः । द्विजराजाः ब्राह्मणश्रेष्ठाः, द्विजराजश्चन्द्रः । अन्दुको निगडः । स मत्तद्विपेष्वेव; बन्धनाय चोराद्यपराध्येव नासीदिति भावः ॥४१॥ चोलयेति । हेलया क्रीडया । स्थिरतराम् उत्तगां स्त्रियम् ॥४२॥ अधिगम्येति । खगकेतुः गरुडध्वजो विष्णुः ॥ ४३ ॥

प्रथमेतरं प्रौढामिति यौवनेन अन्वयः । शम्बरवैरी मन्मथः, तस्य योषा रतिः । तार्तीयीकम् ऋण प्रजारूपं पितॄणाम् ऋणम् । तद्दर्शनेति इन्दिरारमणदर्शनकुतूहली । वृषशैलः वेंकटाचलः, 'तिरुप्पदि' इति ख्यातः । पूर्तधर्मः तडागवापीखननम्, देवालयनिर्माणम्, आरामस्थापनामित्यादिधर्मः पूर्तमुच्यते । कृतनिकेतनं वासस्थानीकृतम् । साचिर-

अथ कदाचिद् अनुदिनम् उपचीयमाननवनवविलासमधुर-तरप्रथमेतरस्मरसञ्जीवननयनानन्दनयौवनोन्मेषया प्रत्यग्रसुधारस-मधुरिमधुरीणकलसूक्तिपरिहसितशुकशारिकाभाषया सहजसौन्दर्य-विनिन्दितशम्बरवैरियोषया निजमनोऽनुकूलया कूलंकषस्नेहया सर्वतश्च विचक्षणया कृतलक्षणया लक्ष्म्या सह सांसारिकमानन्द-मनुभवन् इन्दिरारमणप्रसादेन तार्तीयिकम् ऋणं परिहर्तुकामः कामं तद्दर्शनकुतूहली सपरिवारः संप्राप्य वृषशैलम्, संसेव्य भगवन्तम्, संमान्य च भूसुरान् पुष्कलाभिः दक्षिणाभिः, तत्र प्रतिष्ठापितशाश्वतपूर्तधर्मः, ततस्ततः परावृत्तः सुवृत्तः तिरु-वेङ्कटनृपालः समागच्छन् अधिसरणि अदृष्टपरस्परैः भूम्यन्तरिक्ष-स्वर्लोकनिवासिभिः प्राणिभिः कृतनिकेतनम् विधिना स्ववैभवं प्रथयितुं निर्मितां त्रिजगत्प्रतिकृतिमिव प्रतीयमानं शेषाहिभोगधव-लेन कनत्कनकरेखाञ्चितसानुना साचिररोचिःशरदम्बुदनिकुरुम्बं लङ्घयता अभ्रंलिहेन शिखरकदम्बेन परिमण्डितम्, दीप्रनरमणि-मयूखसञ्चयपताकोज्ज्वलाभिः, क्रीडत्सुरनरवरसीमन्तिनीपरिभुक्त-निकुञ्जभवनाभिः, उच्छ्रितशिलान्तरगोपुराभिः, ऊर्जितपुष्पवनीभिः

संस्कर्तुष्टीका

रोचिः सविद्युत्कम् । आभिवृष्टत्वादेव पाण्डुरा निस्स्वनाः निश्शब्दाश्च । बलाहकाः मेघाः । पुनरिति कटकलम्बमानमेघाभोगेन पुनर्जातपक्ष इव शैलो भातीति भावः । पुरा शैलाः पक्षवन्त आसन् तत इन्द्रेण छिन्नपक्षाः कृता इति ह्युच्यते । ताम्रपुष्पिका वृक्षविशेषः । दधिफलैः कपित्थफलैः । मोघाभिः पाटलाभिः । पचेलिमं पक्वम् । मिलिन्दा भ्रमराः । डहुः लिकुचस्यैव विशेषः । अनोकहो वृक्षः ।

[1]नगरीभिरिव परिष्कृतम्, [2]अभिवृष्टपाण्डुरनि[3]स्स्वनपृथुल-कटकविलम्बिबलाहकतया पुनः समुदञ्चितपक्षमिव स्थितम्, क्वचन सङ्घटितकाञ्चनशिलाभित्तिषु सानुभागेषु अभिनव[4]विनिद्रताम्रपुष्पिका-पुष्पसच्छायद्युतिमत्पद्मरागमाणिक्यप्रभापटलप्रसरात् सततोदित-सन्ध्यारागमिव विराजमानम्, ग्रथितमालैस्तमालैः अतिविशालैः सालैः पृथुलविटपकदम्बैः कदम्बैः समन्ततः पतितपृथुलसुरभिलफलैः दधिफलैः विकसत्कुसुमौघाभिः मोघाभिः पतत्पचेलिमफलसञ्चय-निचिताभ्यर्णदरीभिः बदरीभिः मिलन्मिलिन्दकुलैर्वकुलैः मधुपकुल-वञ्चकैः चम्पकैः कलितपथिकशोकैरशोकैः अन्यैरपि मधूकतिन्दु-माकन्दपिचुमन्दलिकुचपुन्नागनारङ्गडहुक्रमुकनालिकेरप्रमुखैः अनेकै-रनोकहनिवहैः निरन्तरीकृतान्तरम्, विकटनिकटतटाटवीपटलोषि-तोद्दण्डवेतण्डकण्ठीरवशरभशार्दूलगण्डकगवयक्रोडसैरिभाच्छभल्ल-गोपुच्छवलीमुखचमररोहिषशल्यकेहामृगधूर्तकगौधेयपृषदंशकप्रभृ-तिभिः बहुभिः सत्त्वगणैः निबिडितम्, समन्ततः सन्ततकूजच्छकुन्त-

---

संस्कर्तुष्टीका

वेतण्डो गजः। कण्ठीरवः सिंहः। गण्डकः खड्गः। क्रोडो वराहः। सैरिभो महिषः। अच्छभल्लः ऋक्षः। गोपुच्छः कपिविशेषः। वलीमुखः कपिः। चमररोहिषौ मृगविशेषौ। शल्यकः श्वावित्। ईहामृगो वृकः। धूर्तकः शृगालः। गौधेयः वन्यपल्लीविशेषः। पृषदंशको मार्जारः। सत्त्वगणैः मृगसमूहैः। हिंगुलादयो धातुविशेषाः। जडरीतिः मूर्खप्रक्रिया। जलरीतिः जलमार्गः। क्षमा भूमिं बिभर्तीति क्षमाभृत् पर्वतः। क्षमां क्षान्ति बिभ्राणोऽपि कठिनहृदयः। नारायणशिलोच्चयः वेङ्कटशैलः॥ हेमाद्रिरिति। हेमाद्रिः मेरुः। लब्धुमिच्छा लिप्सा।

सन्ततिविरुतमुखरीकृततरुशिखरव्रातं हिङ्गुलहरितालाभ्रकगन्धककाञ्चनगैरिकाद्यनेकधातुनिकराकरं महोन्नतमपि अङ्गीकृतजडरीतिं क्षमाभृतमपि कठिनहृदयं नारायणशिलोच्चयं व्यलोकयत् ॥

हेमाद्रेर्विजयाय किं नु ककुभामन्तान् परं लिप्सया
द्रष्टुं किं नु विलङ्घनाय नभसः किं वादरेणोच्छ्रितम् ।
शृङ्गैः स्वैरधिकं विडम्बितुमथ त्रैविक्रमान् विक्रमा-
नालोक्यातिननन्द भूपतिरसौ नारायणक्ष्माभृतम् ॥ ४४

द्रष्टॄणां द्रुतमखिलं निहन्तुमंहः
शक्तोऽसाविति नितरां धराधरेन्द्रः ।
कुर्वन्तं स वियदनेकधा शिरोभिः
माहात्म्यान्मनसि तमेक्ष्य मन्यते स्म ॥ ४५ ॥

शक्तो वर्णयितुं विधिर्गिरिमिमं निश्शेषदिग्व्यापिनं
ज्ञातुं दुर्ग्रहमागमैर्बहुविधैराद्यं यथा पूरुषम् ।
अन्ये दुस्तरमन्तरं कथयितुं नालं यतः किञ्चिद-
प्यालोच्येत्थमसौ ननाम शिरसा श्रीवेङ्कटक्ष्मापतिः ॥

---

संस्कर्तुष्टीका

द्रष्टॄणामिति । अंहः पापम् । धराधरः पर्वतः । माहात्म्यात् स्वशिरोभिः आकाशभेदिभिः वियत् आकाशम् अनेकधा भिन्नं कुर्वन्तं तं पर्वतं दृष्ट्वा स मनसि मन्यते स्म ॥ ४५ ॥ ४६ ॥ नूतनेति उल्लसदिति करणद्वयेन उद्दीपनविभावसामग्री कथिता । अगः पर्वतः । धृतियुक्ता धैर्ययुक्ता मानवतीः मानेन प्रियपराङ्मुखीः सुदृशः उपकान्तं कान्तसमीपमनैषीत् । अन्या अपराङ्मुखीः धृतियुक्ताः धैर्ययुक्ताः प्रीतियुक्ताः सुदृशः उत्सुकतामनैषीत् । एवं कोशस्थटिप्पणीसूचनानुरोधेन अर्थद्वययो-

नूतनपल्लवसूननिकुञ्जैः उल्लसदब्जसरोभिरगोऽसौ ।
मानवतीरुपकान्तमनैषीद् उत्सुकतां सुदृशो *धृतियुक्ताः ॥ ४७ ॥
अनयभाग्यजनैरतिदुर्लभैः निधिपतेरतिभाति मनोहरैः ।
क्षितिरनेन [1]धनैर्गिरिणा भृता[2] भृशमपि त्रिदशोरगविष्टपे ॥ ४८ ॥
निखिलमस्य गिरेर्भुवनत्रयं न सममत्र यतः कमलापतिः ।
वसति नित्यमसावतिपुण्यभूरिति च चेतसि कामममन्यत ॥ ४९ ॥

अथ तदवलोकनजनितकुतूहलः तिरुवेङ्कटभूपतिः आगमस्येव अविद्यानिवर्तकतया निवृत्तजराजननिष्कलङ्कपरमात्मतादात्म्य-लक्षणमोक्षाभिलाषुकलोकसंसृतिनिवर्तकतत्त्वज्ञानसमुद्भवकैसाधन-क्षेत्रस्य महामहिमशालिनो नारायणगिरेः उपत्यकायां रुचिरविचित्र-तरकिसलयकुसुमस्तबकाचितैः मदकलकूजत्पिकशुकशारिकागुरुतर-विरुतमुखरैः मनोहरैः सततसञ्चलितमृदुपवनैः उपवनैः सन्तत-मकरन्दास्वादमुदितकृतझांकृतिषट्चरण चरणाधूतप्रफुल्लारविन्द—

1. M. धैरः 2. M. वृता

को. टि.

* P. धृतिर्धैर्यं प्रीतिश्च; अर्थद्वययोजनं कार्यम् ।

संस्कृतटीका

जनं कृतम् ॥ ४७ ॥ अनयेति । अनयभाग्यजनैः नीतिभाग्यरहितैर्जनैः अतिदुर्लभैः निधिपतेः कुबेरस्यापि मनोहरेः मनो हरद्भिः धनैः रत्नादिनि-धिभिः । अनेन शेषाख्येन गिरिणा भृता धृता क्षितिः त्रिदशोरगविष्टपे त्रिदश-विष्टपम् अमरावतीम्, उरगविष्टपं भोगवतीमपि भृशमधिकमतिभाति अतीत्य प्रकाशते ॥ ४८ ॥

निकुरुम्बान्तरनिरर्गलविसृत्वरपरागपुञ्जघुमघुमायितोपकूलैः कूलंकष-प्रेमानुगमलङ्घनीकरकुङ्कुमचडुलबालडोलाखेलत्पुष्करचक्रवाककल-हंसमिथुनैः पथिकजनविरहोद्दीपनैः नलिनीविभ्रमकरैः पद्माकरैः गिरिनिकटस्रवन्तीभिः स्रवन्तीभिः कुल्याभिः विशालाभिः वापीभिः सारिणीभिः बहुभिः प्रहिभिश्च सन्ततं समन्ततः पचेलिमकलमयव-गोधूमाद्यनेकसस्यफलसमृद्धसारवदतिविपुलवलजपरम्परालक्षितम्, अपरमिव काश्मीरखण्डम् अतितेजस्विभिः अधीतत्रिविधागमैः अवगततत्त्वार्थैः अवाप्तसमस्तकामैः इन्दिरारमणचरणविन्यासधन्य-मिदमेव क्षेत्रं मोक्षसाधनमिति तदधिवसितुं सत्यलोकादवनि-तलमवतीर्णैरिव ब्रह्मर्षिभिः बाडबैः, अनुपमवितरणविक्रमसौ-जन्यधन्यैः राजन्यैः न्यक्कृतराजराजविभवैः ऊरुभवैः द्विजचरण शुश्रूषणैकशरणैश्चरणजैश्च मनुजैरन्यैरप्यनेकैः निबिडीकृतम्, त्रिचतुरवरूथैः विहसितसिद्धविमानैः भवनैर्विराजमानम्, बहुविधमहार्हवस्तूपलक्षितापणश्रेणीभिः विपणीभिः अनणीयसी-भिरुपशोभमानं नारायणपुरं [1]प्रविश्य परिज्ञातनिजकुलशासनैः

1. P. has gap from प्रविश्य to प्रकल्प्य

को. टि.

* P. वलजं क्षेत्रम् ।

संस्कर्तुष्टीका

षट्चरणाः भृङ्गाः। कुल्याः कृत्रिमास्सरितः। सारिणी जलप्रणाली। प्रहिः कूपः। बाडबैः ब्राह्मणैः। ऊरुभवैः वैश्यैः। चरणजैः शूद्रैः। वरूथः आवरणं प्राकारो वा। अनेकशालैः भवनैरिति यावत्। अनणीयसीभिः बृहतीभिः। नारायण-पुरं शैलस्याधो वर्तमानम्। वृत्ताः धर्मादिस्थापनसंरक्षणार्थं दत्तं क्षेत्रद्रव्यादि-

तत्रत्यजनैः स्तूयमानस्वकुलोत्तंसगर्भधारकानिर्मितम् आरामगोपुर-प्राकारपुष्करिणीपरिष्कृतम् आलयमवलोक्य प्रहृष्टमनाः प्रणम्य नारायणं प्रकल्प्य च चिरस्थायिनीस्तदभिवृद्धये वृत्तीः, विश्राणितधननिचयप्रीणितधरणीगीर्वाणप्रयुज्यमानपरिगृहीताशीर्वचनः सभार्यः सभाजिताशेषलोकः, ततः प्रस्थितः कतिपयैर्दिनैः पुनरपि वेत्रनगरमाससाद ॥

पत्न्या सहाथ नियमैर्बहुभिः स लक्ष्म्या
सन्तानलाभयतमाननिजान्तरङ्गः ।
आरध्यति स्म मुरवैरिणमूर्जितश्रीः
कारुण्यवार्धिमनिशं तिरुवेङ्कटेन्द्रः ॥ ५० ॥

अवाप्तसर्वकल्याणे तस्मिन् सन्तानकाङ्क्षिणि ।
तत्पुत्रत्वे मनश्चक्रे स्मरन् नन्दवचो हरिः ॥ ५१ ॥

इति श्रीवत्सकुलतिलकायमानश्रीगङ्गाधराध्वरिसुधाब्धिसुधाकरेण
श्रीपार्वतीगर्भसंभवेन श्रीनिवासकविना[1] विरचिते
श्रीमदानन्दरङ्गविजये चम्पूकाव्ये
द्वितीयः स्तबकः ॥

---

1. P. सूरिणा

---

संस्कर्तुष्टीका

दानम् । विश्राणितं दत्तम् । धरणीगीर्वाणा ब्राह्मणाः । सभाजितः सत्कृतः । नन्दवचः 'मद्वंशे तदा तदा दुर्यवनाशिक्षणाय अवतर' इत्येवंरूपम् ।

इति आनन्दरङ्गचम्पूकाव्ये संस्कर्तू राघवशर्मणष्टीकायां
द्वितीयस्तबकटीका ॥

## ॥ अथ तृतीयस्तबकः ॥

[1]ततः शुभे सा समये मृगाक्षी धृतव्रतोर्वीकुशलोदयाय ।
श्रीवेङ्कटक्षोणिपतेरुदारा सुलक्षणा गर्भमधत्त लक्ष्मीः ॥ १ ॥

दिव्येन निह्नुततमःप्रसरोरुतेजः-
संभावितेन सुतरां शुशुभे शुभाङ्गी ।
आरामभूमिरिव माधवसन्निधानात्
स्फूर्जत्प्रवालललिता वनितामणी सा ॥ २ ॥

ततः क्रमेण क्रमुकप्रसूनप्रभं मृगाक्ष्या विरराज वक्त्रम् ।
सौधाकरं बिम्बमणुप्रकाशं प्रगे यथा मञ्जुतमालपत्रम् ॥ ३ ॥

शनैः शनैः सन्ननिजाङ्गयष्टिः दधार यत्नेन विभूषणानि ।
निसर्गतः पल्लवकोमलाङ्गी भूयःप्रसूना खलु वल्लरीव ॥ ४ ॥

---

1. P. has a verse in the beginning:
कमलाश्रितोऽपि भिक्षुः कविरपि न स्तौति कश्चिदन्यं यः ।
जयति विकेशः ताभिः(?) सह देवस्स रसभुक् सदा विरसः ॥

---

### संस्कर्तुष्टीका

अस्मिन् तृतीयस्तबके नायकस्य तदनुजस्य च जन्म, तत्पितुः प्रथमं चेन्नपट्टणगमनं, ततो नूतनपट्टणगमनं च वर्ण्यन्ते । दिव्येति । संभावितेन संभवेन । माधवः विष्णुः, यस्यायं भविष्यन्नायकोऽवतारः, वसन्तश्च ॥ २ ॥ ततः क्रमेणेति । वक्त्रं क्रमुकप्रसूनप्राभातिकचन्द्रबिंबवत् पाण्डु जातामिति यावत् । मञ्जुतमालपत्रं चारुतिलकयुक्तं वक्त्रम् । 'तमाल-पत्रतिलक-' इत्यमरः । चन्द्रकलङ्कस्योपमेयमिदम् ॥ ३ ॥

कुल्पालिका कुलीना स्त्री । कात्यायनी विधवा अर्धजरती काषाय-वसना । दौहृदललामेषु गर्भचिह्नेषु । यस्याशेति विराजः पुरुषस्य

सा *जानिस्तिरुवेङ्कटात् क्षितिपतेः श्रेष्ठा सतीनामगात्
संमानं विपुलप्रमोदभरितस्वान्ता नितान्तादृता ।
कल्याणाचरणैरभीक्ष्णमखिलैराशीर्विशेषैः सता-
मश्रान्ताकलितावना सुवदना रक्षौषधीभिः परम् ॥ ५ ॥

एवम् अनुदिनमभिनवायमानेषु मुहुर्मुहुः कुलपालिकाभिलक्षितेषु कात्यायनीजनाभिनन्द्यमानेषु सानन्दमनुभूयमानेषु दौहृदललामेषु

यस्याशा श्रुतिरब्जचण्डकिरणौ नेत्रे नभस्वानसुः
नाभिर्व्योम पदे क्षितिर्हुतवहो वक्त्रं शिरो द्यौरपि ।
कुक्षौ प्राणिगणस्स कर्तुमवनं भूमेः खलान् शासितुं
गर्भेऽशेन मुदावसन्मृगदृशस्सत्यप्रतिज्ञः पुमान् ॥ ६ ॥

ततः चिरकालार्जितसुकृतनिकरपरिपाकमये समग्रतरशुभफलानुकूलस्थितिशालिनवग्रहवलये शुभंयुसमये सा तिरुवेङ्कटपुरन्ध्री सुपर्वाधिपमिव कश्यपसीमन्तिनी, दाशरथिमिव

---

को. टि.

* P. जानिर्भार्यावरस्त्रियोरिति नाना ।

---

संस्कर्तुष्टीका

वर्णनम् । स भूमेरवनं रक्षणं कर्तुं सत्यप्रतिज्ञः सत्या त्वद्वंशे भूयोऽपि अवतरिष्यामि इति नन्दगोपाय दत्ता प्रतिज्ञा यस्य सः । अंशेन मृगीदृशो गर्भे मुदा अवसत् ॥ ६ ॥ पुरन्ध्री कुटुम्बिनी पत्नीति यावत् । सुपर्वाधिप इन्द्रः । कश्यपसीमन्तिनी अदितिः । नन्दिनी कामधेनुतनया । वनीपको याचकः । भीष्मककन्यका रुक्मिणी । तस्या इति । आनन्दवार्धिः तस्या उदरे सुते गर्भभूते

कोसलेश्वरनन्दिनी, नन्दिनीव वनीपकजनमनोरथम्, भीष्मक-कन्यकेव प्रद्युम्नम् अखिलजनहृदयनयनानन्दं नन्दनमविन्दत ॥

तस्याः सुतेन जठरे न्यवसत्प्रयत्ना-
दानन्दवार्धिरनवाप्य सहावकाशम् ।
तस्मिन् कृतावतरणे तरलायताक्ष्या
गर्भादुवास सविलासमसौ समृद्धः ॥ ७ ॥

सर्वधारितपस्योद्यन्मनसः कमलापतेः ।
सर्वधारितपस्योद्यच्छरीरत्वं समञ्जसम् * ॥ ८ ॥

तस्य च डिम्भस्य जातमात्रस्य मित्रतेजःपटलप्रतिभटैः प्रतीकप्रभाकूटैः सत्वरं विसृत्वरैः सर्वतः सर्वमपि हरिदन्तरं निरन्तरीबभूव ॥

---

को. टि.

* P. अत्र त्रेधा अर्थयोजनम् । सर्वधा सर्वप्रकारेण अरीणां बालिवृत्र-प्रभृतीनां तपस्यायामुद्यन्मनो यस्य । सर्वा सर्वविषयिणी धा बुद्धिः यस्य तत् सर्वधम्; तादृशमरि चक्रम्, तस्य तपस्या । तिरुवेङ्कटस्य चक्रावतारत्वेन पूर्वमुपपादितत्वात् । सर्वधारितपस्यः सर्वधारिनाम-संवत्सरफाल्गुनमासः । तस्मिन् तस्योत्पत्तिरिति भावः ।

---

संस्कर्तुष्टीका

सति अवकाशस्य अपर्याप्त्या तेन सह आनन्दवार्धिः प्रयत्नात् श्रमेण न्यवसत् । नारायणसमुद्रयोः सहभावान्नारायणेन सह समुद्रस्यापि गर्भप्रवेश उचित एव । तस्मिन् सुते गर्भाद् अवतीर्णे सति पूर्णावकाशलाभात् सविलास यथेच्छं स आनन्दवार्धिः तस्यामुवास, जन्मानन्तरमानन्दः परमवर्धतेति यावत् ॥ ७ ॥

प्रसूः समीक्ष्यैव निमीलिताक्षी नासीत् तनूजं सुखपारवश्यात् ।
किन्तु त्विषां बृन्दममुष्य सूनोः सोढुं परं नूनमशक्तितोऽपि ॥

सुहृन्मुख*सुमोद्गतं जनिमदात्मजश्रीकथा-
सुधारसमसौ मुहुर्मुहुरवाप्ततोषः परम् ।
निपीय बहुशः श्रवःपुटयुगेन बोम्मेन्द्रभूः
निरन्तरतयान्तरादिव ससर्ज बाष्पं दृशः ॥ १० ॥

तत्रातितीव्रमतिकौतुकतस्समेत्य
पुत्रोऽजनीति चतुरक्षररत्नदात्रे ।
प्रीतोऽदिशत् किल जनाय धनानि गाश्च
रत्नानि लक्षगुणितानि स भूमिपालः ॥ ११ ॥

ततः तदात्व एव निखिललोकानन्दनन्दनसंभूताभङ्गुर-जरीजृंभत्कौतुकाङ्कुरितैः कनककोणाहतभेरीपटहनिस्साणवीणावेणु-मृदङ्गाद्यनेकवाद्यघोषैः अनवद्यहृद्यतरविद्यावैशद्यविद्योतितप्रद्यो-

को. टि.

* M. सुमश्चन्द्रः, स एव मुखमिति रूपकम् । P. सुमश्चन्द्रः ।

संस्कर्तुष्टीका

सर्वधारीतिश्लोकस्य श्लिष्टोऽर्थः कोशस्थटिप्पण्यैव स्पष्टीकृतः । मित्रः सूर्यः । प्रतीका अङ्गानि ॥ प्रसूः जनयित्री, न केवलं सुतानिरीक्षणसुखपारवश्याद्, अपि तु तत्तेजोदुस्सहत्वाच्च निमीलिताक्षी बभूव ॥ ९ ॥ सुहृदिति । सुमोद्गतमित्यत्र कोशस्थटिप्पणी द्रष्टव्या । बोम्मेन्द्रभूः तिरुवेंकटः ॥ १० ॥ ११ ॥ कौतुकं उत्सवो वा । कोणः वाद्यताडनसाधनम् । कशिकाचार्याः गान्धर्वाचार्याः नाट्याचार्या वा । अङ्गहारः अङ्गविक्षेपः ।

तनप्रभान्यक्करणधुरीणतेजःप्रसरभासुरभूसुरनिकरप्रयुज्यमानामोघा-
र्भकमहितमङ्गलशीर्वचनैः निरवधिकामोदभरितहृदयकुलपुरन्ध्रीसमु-
दायसमुदीरितपरस्परशोभनकथनैर[1]तिचतुरसानन्दवन्दिमागधजन-
बृन्दपरिपठ्यमानप्रशस्तसमस्तनिजयशःस्तोमाङ्कितबन्धुरप्रबन्ध-
ध्वनिभिः मुखरीकृतम्, क्वचिदभिरूपैः सुरवांशिकैरिव मूर्तिमद्भिः
सुवेषैः मधुरभाषैः सललितं श्रीमद्भिर्गायद्भिर्गायकैः, क्वचन
नाट्यविद्याविशारदकैशिकाचार्यनर्तिताभिः कमनीयतर[2]नेपथ्यसमु-
ज्ज्वलप्रौढसुललिताङ्गहाराभिः उत्तुङ्गकुचतटविलसत्तरलमौक्तिक-
हाराभिःताललयानुगतचरणकमलविन्यासझलञ्झलायितमणिमञ्जी-
राभिः तत्तादृशानेकभावविशेषसौरभाञ्चितलोचनविभ्रमाभिः चारु-
तर[3]साकूतमन्दहसितविलसद्वदनारविन्दाभिः अन्यतरमधुरगीता-
लापसम[4]कालपल्लवितनिकटोपविष्टवैणिकवीणाभिः प्रवीणाभिः वार-
विलासिनीभिः अभिनीयमानललितार्थावधारणविवशहृदयजनित-
सात्त्विकभावैः आलोककलोकैः [5]अभिलक्षितकुमारजननसमयाभि-

1. M. wrongly -रीति- 2. P. -नैपथ्य-
3. M. सात्वत 4. M. wrongly समय
5. M. अभिलसित

संस्कर्तुष्टीका

'आलापसमकालपल्लवित' इति चम्पूभारतात् (१. ८) उपजीवितम्।
सात्त्विकभावाः अश्रुरोमाञ्चादयः। उपदा उपायनम्। परिस्तोम
आस्तरणम्। अधिधरणीतलं भूम्याम्। अब्जनयनस्य विष्णोः जननेन समुन्मि-
षितो यो हर्षस्तद्वन्तः अनिमिषाः देवाः, तेषां परिवृढः मुख्यः इन्द्रः। तत्सं-

वीक्षितनवग्रहप्रचरणावधृतसमग्रोदग्रतरफलप्रतिपादनवैज्ञानिकैः सर्वज्ञैः दैवज्ञैः प्राज्ञैः पुरस्कृतधननिकरैः पौरैः अपहृतबहुतरोपदैः जानपदैश्च निबिडीकृतम्, समन्ततः चित्रतरकनककुसुमाञ्चितविस्तृतपरिस्तोमास्तीर्णतया अधिधरणीतलम् अञ्जनयनजननसमुन्मिषितहर्षवदनिमिषपरिबृढसञ्चोदितबृन्दारकबृन्दोपहृतनन्दनोद्यानवनोच्चावचकल्पप्रसूनैरिवाभिवृष्टम् प्रहृष्टः सदोमण्डलमलंकुर्वाणः तिरुवेङ्कटक्षितिपतिः सुरपतिरिव सुमनोभिः सदस्यैः संभाव्यमानः ससुहृज्जनः परं बहुभिः वसुधान्यराशिभिः अपरिमितैर्गोधनैः महाधनैर्वसनैः वृत्तिभिश्च सन्तर्पितवसुमतीसुरनिकरः समर्यादमभिसत्कृतपौरजानपद[1]महत्तरः, विश्राणितपूर्णानकपूर्णमनोरथवारवधूनटगायकमागधस्तुतिपाठकवैणविकपाणिवादाद्यनेकोपजीविजनमुखोदीरितजयमङ्गलवचनः प्रचुरतरमानन्दमनुभवन् पङ्क्तिरथ इव जानकीरमणेन, जिष्णुरिव जयन्तेन, निधिपतिरिव नलकूबरेण, सर्वातिशायिना तनयेन पुत्रितासाम्राज्यपदाभिषिक्तम् आत्मानं धन्यतमं मन्यते स्म ॥

1. M. corrupt here.

संस्कर्तुष्टीका

चोदितेत्यादि । आस्तरणकुथेषु दृश्यमानानां कुसुमचित्राणां देवाभिवृष्टकल्पवृक्षकुसुमत्वेन वर्णनम् । वृत्तिभिः धनभूम्यादिनिरन्तरदानकल्पनैः । वसुमतीसुराः द्विजाः । महत्तराः ग्राममुख्याः । पूर्णानकम् उत्सवकाले मित्रदासीवर्गेभ्यो दीयमानं वस्त्राभरणकम् । वैणविका वांशिकाः । विजयेनेति । अधिरङ्गं युद्धरङ्गे । नाम तदेव विजयानन्दरङ्ग इति ॥ १२ ॥ संवननं

विजयेन परं विरोधिनां ध्रुवमानन्दमसा[1]वुपैष्यति ।
अधिरङ्गमिति स्म शोभनं तनुते नाम तदेव तात्पिता ॥ १२ ॥

स तु पुनः क्रमेण कुमारः सकलजनहृदयसंवल(न)नपटुतरानुभावेन बालभावेन [a] भेनमण्डलगलदमृतधारामधुरिमधुरीणमनोहरमृदुलशीतलालापैः, कोमलतरकरसरोजसहकृत्वर (सहकृतसत्वर?) जानुयुगलीकेलीचङ्क्रमणैः लीलामञ्जुलमन्दहासितैश्च शक्तिधर इव प्रसूजनयितारौ इतरानपि जनानभिलषित[2]परभागेन हर्षेण च मुहुर्मुहुर्मेलयामास ॥

कलयन् [3]रमणीयबालचेष्टां क्रमशो [4]ग्लौरिव नन्दनीयशोभः ।
तिरुवेङ्कटवार्धिवृद्धिहेतोः विपुलश्रीः किल वर्धते स्म बालः ॥१३॥

तस्मिन् महार्हगुणशालिनि दिव्यरूपे रत्ने समुन्मिषति दीधितिदीपिताशे।
श्रीवेङ्कटक्षितिभृतः सुकृतैकयोगादन्वर्थतामुपगता ननु रत्नगर्भा ॥

[5]ऊचुर्लक्षणिनो विलोक्य पदयोः पाण्योः पयोजध्वजे
छत्रं चक्रममुष्य शंखकलशौ रेखाकृतीः सत्कथाः[6] ।

---

1. M. उपेक्ष्यति P. उपेष्यतीति a. M. फेन.
2. M. अविलक्षित 3. M. क्रमणीय 4. P. गौरिव
5. M. ऊर्ध्वम् 6. M. सत्कृताः

---

संस्कर्तुष्टीका

वशीकरणम्। भं तारा, भेनस्तारानातिश्चन्द्रः अनुभावः प्रभावः, अवस्थोचिता क्रिया वा । शक्तिधरः कुमारः । अभिलषितमभिलाषः, तत्कृतोत्कर्षेण हार्देन प्रेम्णा, हर्षेण च मेलयामास योजयामास ॥ कलयन्निति । ग्लौः चन्द्रः ।

सम्राडेष समुज्ज्वलाभ्युदयभूरुद्दामकीर्तिच्छटः
सर्वज्ञः क्षितिमण्डलस्य तरसा गोप्तेति तादृङ्मनाः ॥

इत्थमत्यद्भुतनिस्तुलबालभावलीलालंकृतविजयानन्दरङ्गवदनकुमुदबान्धवकान्तिचन्द्रिकास्वादनजनितसौहित्यविकस्वरनिजनयनचकोराभ्यां निरवधिकतनयप्रेमरसाभिवर्धितप्रहर्षाङ्कुराभ्यां लक्ष्मीतिरुवेङ्कटभूपालाभ्यां निमिषसदृशमतिवाहितेषु कतिपयेषु वत्सरेषु—

विजयचापसितप्रतिपत्सुधाकिरणवासरतौलिविलग्नके ।
सुगुणमन्यमसौ सुषुवे सुतं सहचरी तिरुवेङ्कटभूपतेः ॥१६॥

फणिपतिरिव कामं कर्तुकामोऽस्य दास्यं
निखिलभुवनरक्षामच्छ पूर्वोदितस्य ।
धिषण इव मनीषाशेवधी रङ्गनेतुः
समजनि सहजः श्रीवेङ्कटाख्यः क्षमावान् ॥ १७ ॥

---

संस्कर्तुष्टीका

ऊचुरिति लक्षणिनः सामुद्रिकलक्षणविदः । तरसा बलेन । तादृङ्मनाश्च इति सत्कथा ऊचुरिति अन्वयः । तादृङ्मनाः, सम्राट्त्वादियोग्यं तादृग् महत् मनः यस्य स इत्यर्थः ॥ १५ ॥ कुमुदबान्धवश्चन्द्रः । सौहित्यं तृप्तिः ॥ विजयेति । विजयनाम्नि वत्सरे चापे धनुर्मासे मार्गशीर्षे सितप्रतिपदि शुक्लपक्षप्रथमायां सुधाकिरणवासरे इन्दुवासरे तौलिविलग्नके तुलालग्ने द्वितीयतनयस्य जन्म ॥ १६ ॥

फणिपतिरादिशेषः । निखिलभुवनरक्षामच्छ निखिलभुवनरक्षार्थम् । 'अच्छ' इति आभिमुख्यार्थमव्ययम् । पूर्वोदितः अग्रजः, पुराणपुरुषश्च । अत्र भ्रात्रोः रामलक्ष्मणसमाधिः । धिषणः बृहस्पतिः ।

तदनु तज्जननी नियतेर्बलाद् अननुभूय तनूजसुखानि सा ।
उपगता निधनं हरिवासरे प्रियजनव्यसनानि वितन्वती ॥ १८ ॥

मनःप्रह्लादनं वस्तु यच्च नेत्ररसायनम् ।
विपत्पदमकृत्वा तन्न निद्राति जडो विधिः ॥ १९ ॥

तथा गतां तामनुवीक्ष्य भूपः तलोदरीं प्राणसमां विविग्नः ।
नवेन शोकेन समाकुलात्मा भृशं स चक्रन्द चिरेण हार्दात् ॥ २० ॥

इत्थमुत्थितमतर्कितमतितीव्रं दुर्वारतरम् और्वकृशानुमिव शोकावेगं प्रसोढुमक्षमतया क्षमायां निपत्य क्षितिपतिः सप्रवेष्टविक्षेपं प्रसमीक्ष्य मृगाक्षीं मुहुर्मुहुर्विलपन् सकरुणमरुणीकृतास्राविलनयनः सरभसमुपागतैः पौरैः बान्धवैश्च समदुःखैरवगताखिललोकस्वभावः सहजेन कृष्टिः[1] धीरप्रवेकस्त्वं सुधीर्मा कृथा व्यथामेवंविधां मनसीति पुनः पुनराश्वासितः कथंचित् शोकसागराद् धृतितटमानीयते स्म ॥

---

1. M. तुष्टि

---

संस्कृतटीका

अनुजस्य तिरुवेंकट इति नाम ॥ १७ ॥ तदन्विति । हरिवासरे एकादश्याम् ॥ १८ ॥ तथागतमिति । तलोदरी शातोदरी । विविग्नः आर्त्या क्षुभितः । प्रवेष्टो भुजः । लोकस्वभावः जातस्य मरणं ध्रुवमित्येवंरूपः, सोऽवगतो येन । सहजेन स्वभावेन । कृष्टिः विद्वान् । 'कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः । प्रवेक उत्तमः । बन्धुता बन्धुसमूहः । और्ध्वदेहमन्त्यकर्म ॥ २१ ॥ भृत्येति भृत्या भरणं चिकित्सा । यथाह कालिदासः 'कुमार-

ततः समस्तान् विधिवद् द्विजातीन् सन्तर्प्य गोभिर्बहुभिर्धनौघैः ।
सुधीरधीर्बन्धुतया समेतः निर्वर्तयामास तदौर्ध्वदेहम् ॥ २१ ॥

भृत्यापोषणलालनान्यनुकलं धात्रीजनैरन्वहं
यत्तैर्वृद्धिमुपेयुषोस्तनययोः कुर्वन् ततः श्रीमतोः ।
आनन्दामृतवार्धिमध्यविहरत्स्वान्तःकुमारावसौ
पश्यन् दान्ताशिखामणिः प्रियतमाविश्लेषदुःखं जहौ ॥

तिरुवेङ्कटभूपालः कदाचित् चेन्नपट्टनम् ।
दिदृक्षुः स्वात्मजः प्रायाद् आत्मसैन्यैरनुद्रुतः ॥ २३ ॥

तत्रापि सर्वैर्विदितात्मवृत्तैः[1] सुत्रामतुल्यो महितः स्वपौरैः ।
पुरस्कृतो ग्लौरिव तारकौघैः तिरस्कृताशेषतमा विरेजे ॥ २४ ॥

ततस्तस्यां नगर्यां महत्तरार्यजनभूयिष्ठायां प्रतिष्ठितास्तिरुवेङ्कटनृपवरिष्ठः लघिष्ठेतरलोकोत्तरविचित्रचारित्रो[2] विचारितनिजधैर्यदाक्ष्यसीमेन[3] हूणसार्वभौमेन अभिनन्दितः तद्विश्राणितप्रक्रियाम्

---

1. M. बृन्दैः  2. M. चरित्रः
3. M. वैसमेन

---

संस्कर्तुष्टीका

भृत्याकुशलैः' इति (रघु.३.१२)। यत्तैः उद्युक्तैः ॥२२॥ तत्रापीति। सुत्रामा इन्द्रः। अर्यजनाः वैश्याः। हूणसार्वभौमेन आङ्ग्लानामध्यक्षेण 'एड्वार्ड् हार्रिसन्'नामकेन। प्रक्रियाम् अधिकारपदम्। तातस्ततानि नानादिक्षु स्थितानि। अन्तर्सीपाणि द्वीपाः। सांयात्रिकः पोतवणिक्। कौशेयं सूक्ष्मपीताम्बरादि।

अधिगतःतातस्ततान्तरीपान्तरव्यापृतानर्घतमापूर्वनिस्तुलबहुलवस्तु-संग्रहण[1]चतुरतरजागरूककृतार्थै[2]सांयात्रिकसार्थाधिष्ठितैः अभ्रंकष-दृढतरगुणमहीरुहाकलितपताकापटपटध्वनितमुखरितनिखिलककुप्-तटैः अष्टापदकलधौता(दि ?)[3] निकरभरितविशङ्कटपेटिकापटलजटिलैः कौशेयराङ्कवपरिस्तोमप्रमुखमहार्हवसननिचयनिचितैः जातीफल-देवकुसुमाद्यनेकागण्यवरेण्यपण्यवस्तुपूर्णैः बहुतरलाभलग्नकैः अस-कृदुपागतैः अतिजघनैः तरिनिकरैः अधिगतबहुधनसन्तोषित[4]हूण-परिबृढगाढपर[5]प्रेमास्पदी[6]भूतः प्रभूतामलयशश्चन्द्रिकानन्दित-निखिलजनमनश्चकोरकः कैरवबान्धव इव प्रियदर्शनः सुदर्शनात्मा* सुखेन कञ्चन समयमनैषीत् ॥

अथैकदा नूतनराजधानीम् उच्चै प्रथां नेतुमिव *स्ववृद्ध्या ।[7]
यशःप्रकाशस्तिरुवेङ्कटेन्द्रो दिदृक्षुरात्मीय[8]जनान् प्रतस्थे ॥

प्रतिष्ठमानः पुनरसौ अन्वीयमानः स्वैः स्वैरः सुदूरमनुगतं महत्तरपौरनिकरमनुज्ञाय विज्ञाय[9] प्रश्रयभूषणयोस्तनययोः छन्द-

---

1. M. has gap here. 2. P. कृतार्थी 3. G. -ष्ट्र-
4. M. भूषण- 5. P. परमः 6. M. आस्पदभूत
7. M. स्ववृद्धाः 8. M. अक्षीय 9. P. omits विज्ञाय

---

को. टि.

*. P. सुदर्शनात्मा चक्रावतारः । * P. स्ववृद्ध्या द्रव्यवृद्ध्या ।

---

संस्कर्तुष्टीका

राङ्कवं मृगरोमजमूर्णादि । देवकुसुमं लवङ्गम् । लाभलग्नकैः तत्प्रतिनिभिभूतैः । अतिजघनैः बृहदधोभागैः । तरिः नौः ॥ अथेति। नूतनराजधानी 'पुदुचेरि' इति

-मन्तर्विजयानन्दरङ्गतिरुवेङ्कटयोः समाधाय च मुहुर्मुहुः पुरस्ता-
दानीतं विनीतिमता उपजीविजनेन उभयतः प्रयत्नधृतवल्गं
वल्गन्तमधिकं स्यदातिरेकन्यक्कृतार्कार्वरयं[1] पौरुषाधिकं माने
कर्कमधिरुह्य पुरुषाग्रणीः दिवस्पतिरिव उच्चैःश्रवसम् अव-
सञ्चारातिरकुतोभयः क्रमेणातिवाह्य जनपदान् समन्ततः सततो-
त्स्थितैः आधिनगरोपशल्यमारोपितैः अतलिनैः अतिमलिनैः साम-
न्तरक्षोधिपप्रेषितैरिव [2]यातुभिरुदग्रैः तालमहीरुहैः अभिगुप्तं
समन्ततः[3] खर्वेतरवेगोपगतोपान्तप्रदेशशताङ्गकृतावतरणैः तुङ्ग-
तरतरुनिकरशिखराधिरूढप्रौढमत्तकोकिलकाहलीकलकलकलाराव-
मुखरीकृतान्तरनिरन्तरपल्लवितसुरभिलाभिनवप्रसवप्रसाधितकोमल-
वल्लरीजालकसंवलितमृदुलमलयसमीरचलितच्युतसूननिचयनिचित-
गुञ्जद्द्विरेफनिकुञ्जभवनतलोपविष्टैः अनवद्यहृद्यनिजसौन्दर्यवि-
निन्दितसुरसुन्दरीजनरिरंसुवधूटीघनजघनस्थलावलम्बिहृदयैःसदय-
मदनसार्वभौमशासनवशंवदैरुदारैःयुवजनैरुपभुक्तगुणवदाक्रीडशता-
लंकृतं नियतभागधेयोपसमर्पणव्यग्रतरचिरागतालब्धावसरसामन्त-

---

1. M. न्यक्कृतार्कद्वितयम् P. अधिकस्यदातिरेकन्यक्कृतमर्कद्वितयम्।
2. M. and P. धातुभिः 3. P. सर्वतः

---

संस्कर्तुष्टीका

ख्याता नगरी। आत्मीयजनान् स्वस्याल 'नैनियपिल्लै' प्रमुखान्। वल्गा
प्रग्रहः। स्यदो वेगः। अर्वा अश्वः। रयो वेगः। पौरुषाधिकं माने पुरुष-
प्रमाणाधिकम्। अतलिनैः अविरलैः। यातु रक्षः। अभिगुप्तम्—एतादृशम्
अभिनवनगरमाससाद इत्यन्वयः। शताङ्गो रथः। प्रसवः पुष्पम्। रन्तुमिच्छू

राजसैनिकाध्यास्यमानपटमन्दिरधोरणीनिबिडीकृतपरिखापरिसरम्, परितः सर्वविस्मयनीयपरमोच्चैष्ट्वसंपदवधिभूतेनाधिगतपुष्पवत्तोज्ज्वलाभ्र[1]लक्ष्मीसमागमसमुन्मिषितं दोषमपाकर्तुकामेन दुरवगाहगभीरपरिखाम्भःप्रतिबिम्बदंभप्रकटिताघमर्षणसवनविधिना कुलाचलवप्रप्रतिनिधिना समुन्नतविकटविशङ्कटाट्टालकपटलनिवेशितप्रतिभटानीककुलघ्नशतघ्नीसहस्रसंकुलेन निस्तुलेन महता वरणेन वेष्टितम्, करोद्यतहेतिभीषणसततकृताहिण्डनप्रमत्तेतरदण्डधराकिङ्कराकारविकृतारक्षकसहस्राभिरक्षितातिविस्तृतचतुर्द्वारोपलक्षितम्, प्रतिविशिखमतिविततपल्लवितपरश्शतशाखापरिवेष्टित[2]पार्श्वद्वितयप्ररूढसमव्यूढमहीरुहतिरस्कृतभास्करतेजःप्रसरम्, विवस्वद्रथगतिनिरोधकल्यविन्ध्यशिखरायमाणधवलकलधौतधौतसौधराजि[3]पुरस्सर[4]राजमानमहारजतमयागारद्वारकलितललितकुलायलीलासमुत्सुककपोतशुकशारिकासहस्रोपन्यस्यमाननानाविधमदनागमरहस्यश्रुतिमुदितहृदयनिर्जरजनविलासालापमुखरीकृतानेकप्रतोलीपरिष्कृतम्, पुष्करान्तराविष्कृतनटत्पटकेतनसमुद्धूतगुरुतरसमीरचलाचलचञ्चरीकाञ्चितविकचस्वर्वा-

1. M. उज्ज्वललक्ष्मी 2. P. परस्परपार्श्व
3. P. omits पुरस्सर 4. विराजमान

संस्कर्तुष्टीका

रिरंसुः। आक्रीड उद्यानम्। पुष्पवन्तौ दिवाकरनिशाकरौ, तद्भावः। दोषं पुष्पवत्या समागमाज्जातम्। सवनं स्नानम्। विशङ्कटः विशालः। अट्टालकः प्राकारोपरिगृहकम्। वरणः सालः। हिण्डनम् अटनम्। आरक्षकाः रक्षिपुरुषाः। विशिखा वीथी। कल्यं सज्जम्। कलधौतं महारजतमुभयमपि हेम।

हिनकिनककमलसन्दोहविगलन्मकरन्दधारानिरन्तरासेकघुमुघुमाय- मानाशिशिरराजपथम्, रतिपतिनिगमपारावारपारीणचातुरीधुरीण- भरताचार्यशिक्षिताभिनयविद्याविद्योतितसद्योयुवतिचरणकमलवि- न्यासलीलातरङ्गितरङ्गम्, अङ्गजमहाराजनियतसेवाप्रसितविदग्ध- विटविदूषक[1]पीठमर्दकप्रायाद्यनेकयुवजनालङ्कृतवेशवाटसहस्रम्, अजस्रमपि व्रततपोनियमविशेषपूर्वकाधीतसाङ्गत्रयीककर्मशीलश्रीम- दसंख्यसंख्यावद्देशिकव्याकृतषड्दर्शनीपुराणधर्मशास्त्रदुरूहार्थविधा- रणैकतानस्वान्तानिष्णातान्तेवासिजनव्रातवदनोद्गतान्तरितान्तिक- महार्णवगभीरारावन्यायोपन्यासधोरणीकोलाहलमुखरीकृतवसुधा- सुपर्ववाटीकम्, आसेतुहिमाचलमधिवेलातटनिविष्टतत्तन्नगराकर- निष्पन्नसमस्तमहार्हवस्तुसम्पादनव्यग्रतरचतुरकर्णधारवरिष्ठाधिष्ठित- बहुतरतरणिविसरानीतक्रीतरजतमहारजतप्रमुखमणिरत्नविक्रयबहु- गुणितधनलाभाल्पीकृतनिधिनायकविविधाकल्पोज्ज्वलधन्यतमवदा- न्यनिरातङ्कसुखितसक्थि[2]संभवलोकसहस्रसंकुलम्[3] द्वीपान्तरागता- चिरावतीर्णमहोन्नतसिन्धुरगन्धर्वकुलाविलसदर्णववेलम्, अतिवेलम-

---

1. M. omits पीठमर्दक। 2. M. and P. wrongly सग्धि.
3. M. संकुलवद्द्वीपान्तर-

---

सस्कर्तुष्टीका

कुलायः नीडम्। प्रतोली रथ्या। पुष्करान्तः जलमध्ये। चलाचलाः अत्यन्तमनवरतमितस्ततो वा चलन्तः। चञ्चरीका भृङ्गाः। प्रसिता आसक्ताः। संख्यावन्तो विद्वांस.। अन्तरितः तिरस्कृतः अन्तिकस्थमहार्णवगभीराराबः येन सः न्यायोपन्यासधोरणीकोलाहलः। वसुधासुपर्वाणो ब्राह्मणाः, तेषा वाटी अग्रहारः।

परिच्छिन्नाङ्गरामणीयकसौन्दर्यपराकृतव्रीडितान्तर्हितखेटवधूटिकाभीकबहुलहूणतरुणीजनचरणकमलविन्यासधन्यम् , वारणावतमिव विजयधर्मोद्भवैकनिलयम् , साकेतमिव महनीयरामास्पदम् , उच्छ्रितपताकालङ्कृतमपि सन्ततमधरीकृतपताकम् ,* सुखैकशरणमपि नित्यनिराकृतसुखम्* अभिनवनगरमाससाद ॥

यत्र स्थितानां ललनाजनानां [1]कुचे विरोधादिव हेमकुंभाः ।
हर्म्याग्रदुर्गाकलिताधिरोपाः सद्वृत्तवैरं तु विपत्तये हि ॥ २६ ॥

अत्युच्चसौधविलसत्पृथुहेमकुम्भैः सत्रा हि यत्र दिविषत्स्त्रिय आदरेण ।
वक्षोजकुम्भयुगलीपरिमाणतौल्यलक्ष्मीपरीक्षणमनुक्षणमाचरन्ति ॥

1. M. corrupt here.

को. टि.

*. P. अधरीकृतपताकं निराकृतचोरोपद्रवम् । * P. सुखा नाम वरुणनगरी ।

संस्कर्तुष्टीका

आकराः पण्यवस्तूत्पादस्थलानि । कर्णधाराः नाविकाः । तरणयः नावः । आकल्पो वेषः । सक्थि ऊरुः । तत्संभवा वैश्याः । सिन्धुरा गजाः । गन्धर्वा अश्वाः । खेटवधूटिकाः सुरसुन्दर्यः । अभीकाः कामुकाः, तैर्बहुलाः । वारणावतं युधिष्ठिरराजधानी । विजयोऽर्जुनश्च, धर्मोद्भवः युधिष्ठिरश्च । रामस्य आस्पदं रामाणां रमणीनामास्पदमिति च ॥ यत्रेति । हर्म्याग्रदुर्गाः अट्टालकाः तत्र कीलेषु आरोपिताः तद्वद्दुर्गमैकान्तस्थलेषु अपराधिनां शूलारोपणेन दण्डः क्रियत इत्येवमुक्तिः । सद्वृत्ताः वर्तुलाः कुचाः, साधवश्च ॥ २६ ॥

यत्रोद्यत्प्रभरत्नसौधविहरद्वामभ्रुवामंशुकेऽ-
प्युद्वेलस्मरजातमोहविवशो विस्रंसिते वेगतः ।
भूयः कान्तिझरीसितांशुकपरीमोक्षाय यूनां गणो
व्यापारं तनुते करेण जघने स्मेरास्यशीतत्विषाम् ॥२८

अन्तस्सद्मसु कामिनां प्रियतमाक्रीडानुषक्तात्मनां
दीप्रानेकविचित्ररत्ननिचयप्रोद्यत्प्रभेषु स्फुटम् ।
भेदं यत्र तदीयजालकपथायाताः सुशीताः सुखा
दीपानां मणिदीपिकानिवहतः शंसन्ति मन्दानिलाः ॥

उन्नतगोपुरशृङ्गसमुद्यन्नर्तनकेतुपटोरुसमीरः ।
यत्र हि मित्रशताङ्गहयानामन्वहमातनुते श्रमशान्तिम् ॥

यत्र राजभवनेषु रतान्ते निद्रया परवशासु सुदृक्षु ।
संस्पृशत्यवयवं च्युतचेलं स्वर्णदीसुरभिमारुतजारः ॥ ३१ ॥

यत्र कान्तातनुश्रीभिः धिक्कृतं तटितां कुलम् ।
सवेपथु क्षणं नैव स्थितिं लेभे च कुत्रचित् ॥ ३२ ॥

---

संस्कृतटीका

अत्युच्चेति । सत्रा समम् ॥ २७ ॥ यत्रेति । स्मेराननेन्दूनां वामभ्रुवाम् अंशुके विस्रंसितेऽपि उत्कटकाममोहविवशो यूनां गणः स्वच्छवपुःकान्तिझरीमेव सितांशुकं मत्वा पुनश्च विवस्त्रणाय करं व्यापारयतीति भावः ॥२८॥ अन्तरिति । जालकानि गवाक्षाः । यत्र तैलदीपानां मणिदीपिकानिवहाद् भेदं मन्दानिलाः शंसन्ति । तैलदीपानां निर्वापणेन, अन्येषां तथा कर्तुमशक्यत्वाच्चेति भावः ॥ २९ ॥ उन्नतेति । मित्रशतांगहयानां रविरथतुरगाणाम् ॥ ३० ॥ ३१ ॥ ३२ ॥

कलानिधिवनप्रियाकलितवाशितैः सन्ततं
विचित्रविधिसृष्टिभिर्विकसदिन्दिराविभ्रमैः ।
वलारिनगरीसदृग्भृशमगोचरी सा गिरां
नवीननगरी नृणां सुखकरी दरीदृश्यते ॥ ३३ ॥

प्रत्युद्गतः स्वैरथ तत्र मित्रैर्मित्रोरुतेजास्तिरुवेङ्कटेन्द्रः ।
सत्रात्मवृत्तान्त [1]विदं त्वमात्यैः [2]सत्राधिको हूणपतिं ददर्श ॥

विभाव्य राजा विपुलश्रियं तं संभाव्य सम्यक् सकलोपचारैः ।
मन्त्रेषु कार्येषु नयेषु दक्षं मत्वा स चक्रे सचिवं प्रहृष्टः ॥

---

1. P. corrupt here. 2. M. corrupt here.

---

संस्कर्तुष्टीका

कलानिधीति । कलानिधिश्चन्द्रः, तत्प्रियाश्चकोराः । वनप्रियाः कोकिलाः, तैराकलितैर्वाशितैः शब्दैः । अमरावतीपक्षे कलानां नृत्यगीतादीनां निधिभूताभिः । वनं जलं प्रियं यासां ताः अप्सरसः, ताभिः आकलितैः वाशितैः संगीतकशब्दैः । विधिः प्रकारः, ब्रह्मा च । वलारिनगरी अमरावती ॥ ३३ ॥

प्रत्युद्गत इति । मित्रः सूर्यः । अमात्यैस्सत्रा सह । सत्राधिकः सत्त्वं सदादानं, तत्करणादधिकः । आत्मवृत्तान्तविदं हूणपतिं ददर्श ॥ ३४ ॥ विभाव्येति । राजा हूणपतिः, 'डुालेवियर्' नामकः ॥ ३५॥ ३६ ॥ स्वेति । स्वेनैव तिरुवेङ्कटेनैव अवेक्षितानि महाकार्याणि यस्य सः, तादृशेन हूणनृपालेन कृतसत्कृतिः ॥ ३७ ॥

इत्यानन्दरङ्गचम्पूकाव्ये संस्कर्तू राघवशर्मणष्टीकायां
तृतीयस्तबकटीका ॥

सचिवेषु महत्सु सत्स्वपि प्रतिपत्तिं महतीं स भूपतेः ।[1]
लभते स्म तथा हि गौरवं गुणबृन्दं तनुते न संहतिः ॥ ३६ ॥
स्वावेक्षितमहाकार्यनृपालकृतसत्कृतिः ।
उवास सुखितस्तत्र स हि कश्चिदनेहसम् ॥ ३७ ॥

इति श्रीवत्सकुलतिलकायमानगङ्गाधराध्वरिसुधाब्धिसुधाकरेण
पार्वतीगर्भसंभवेन श्रीनिवासकविना विरचिते
आनन्दरङ्गविजये चम्पूकाव्ये
तृतीयः स्तबकः ॥

॥ अथ चतुर्थस्तबकः ॥

तदनु कदाचिद् अतनुमहिमा हिमानीमहीध्रसध्रीचीनो धैर्येण [2]वीध्र्यशोराशिः अशेषराजन्यकसभाजनीयनिजगुणग्रामो रामानुज इव क्षमाकलितोत्तमाङ्गानतिरहीनः, तनयौ दिदृक्षुः वात्सल्येन प्रभोरवाप्यानुमतिम् *अभिमतगुरुकार्यप्राध्वाय सुजन-नयनानन्दनः[3] प्रध्वस्तसाध्वसः चेन्नकेशवपुरमेत्य,. तत्रापि

1. P. भूपतिः 2. M. विध्र्र P. विध्रृ
3. M. omits 'सुजननयनानन्दनः'

को. टि.

* P. अभिमतस्य संमतस्य गुरोः 'गुरुपिल्लैनाम्नः' स्वसंबन्धिनः कार्यम् । प्राक्तनहूणपति...स्वपितृमरणजनितवैरनिर्यातनरूपं तस्य आनुकूल्याय आनुकूल्यार्थं प्राध्वमित्य...नाम्नश्च । पिता 'नयना'भिख्यः तदानन्दन इति प्राक्तनी तत्रत्या काचन कथाऽनुसन्धेया । नयनाख्य प्रागधिकारी कश्चिद्धतवान् । अयं च तं निहत्य गुरूवं (गुरुपिल्लैनामानं) स्थापितवान् तत्स्थाने ॥

प्रेषिताभिमतजागरूकसनियामकनौकातिवाहितवारिवर्त्मकस्वीकृत-गुप्तात्मशासननिजसचिववदनोद्गतनिजोदन्तश्रवणजनितगाढहर्ष-पाश्चात्यप्रांशुहूणपरिवृढप्रहितवाचिकविलोकनावधृतस्वीयसामर्थ्य-प्रत्यग्रनगराधिनाथप्रेषितविनीतमहितमहामात्रसबहुमानाहूतः पुनः सपरिवारः सापत्यः समागत्य नूतनपुटभेदनम् 'अतिपटीयां-स्त्वमस्मदीयमधिकारम् अखिलमावहस्व' इति भूपतिना स्वकरसात्कृतमुद्रोर्मिकः सकलाः प्रजाः चिरं न्यायेन रञ्जयामास ॥

---

संस्कर्तुष्टीका

आस्मिन् चतुर्थस्तबके पितुस्तिरुवेङ्कटस्य कथा मरणं च, नायकस्य अधिकारपदारोपणं विवाहप्रस्तावश्च **वर्ण्यन्ते** । हिमानी हिमसंहतिः । धैर्येण हिमवानिवेति यावत् । वीध्रा शुभ्रा यशोराशिः यस्य सः । क्षमा क्षान्तिः, भूमिः । अहीनः अनूनः, सर्पेश्वरश्च । रामानुजस्य लक्ष्मणस्य शेषावतारत्वात्, शेषस्य भूभारनतोत्तमाङ्गत्वाच्चैवमुक्तिः । 'नयनो' 'नैनियपिळ्ळै' नाम तिरुवेंकटस्यालः, स च हूणपतेरमात्य आसीत्, हूणपतिः 'दुलिवियर्' नामकः हूणसेनापतिः 'हेबर्ट्'नामकश्च तस्मिन् प्रद्वेषाद् मिथ्यापवादमारोप्य तं नैनियं कारागृहे प्राक्षपताम् । स च बद्ध एव अम्रियत । हूणाधिकारिणां वैरममृष्यमाणः तिरुवेङ्कटः, नैनियपुत्रो गुरुवपिळ्ळैनामकश्च नूतनपुरीं विहाय मद्रपुरीमागतौ । मद्रपुरीतः नावमारूढो गुरुपिळ्ळै प्रांशुदेशं गत्वा तत्रत्यप्रांशुभूपालस्य पुरतः स्वपितुरुपरि प्रकटितं द्वेषं पातितमन्याय्यं दण्डं च विज्ञापयामास । न्यायमनुरुन्धानैस्तत्रत्यैरधिकारिभिः गुरुवपक्षे आनुकूल्यमाविष्कृतं, नूतन-नगर्यधिकारिपदात् दुलिवियर् हेबर्ट् उभावपि अवरोपितौ । क्रैस्तवमतमवा-लम्बितश्च गुरुवः नूतनपुरे मन्त्रिपदं प्राप्य प्रातिन्यवर्तत । अत्रान्तरे नूतनपुरे नूतनतया हूणपतिपदं प्राप्तेन 'प्रेवोस्टियर' नामकेन

न्यायवृत्तमुदितश्रि चिराय स्वं निषेवितुमथोद्यतमारात् ।
आनिनाय स पुरं नवमेतच्चेन्नकेशवपुरार्यक*सार्थम् ॥ १ ॥

विशामधीशेन विशस्समस्तान् विशिष्य संमान्य कृतोपचारान् ।
जुगोप कार्येषु स तन्त्रयित्वा यथोचितं वा मरुतो मरुत्वान् ॥ २ ॥

तस्मिन् किल श्रीः सरसेऽनुरक्ते स्थाने यदेतत् कृतसन्निधाना ।
मित्रोदये हृष्यति संकुचंश्च यदेष दोषाकरदर्शनेषु ॥ ३ ॥

---

को. टि.

*. P. अर्यकाः श्रेष्ठिनः ।

---

संस्कृतुष्टीका

समाहूतास्तिरुवेंकटः पुनरपि तत्र जगामेति कथा अनुसन्धेया । अभिमतेति । गुरुकार्ये गुरुपिळ्ळैनामकस्य कार्ये, बृहत्कार्ये च । नयनं नेत्रं नैनियपिळ्ळै च । चेन्नकेशवपुरं चेन्नपट्टनम् । नियामको नाविकः । निजसचिवः स्वसचिवतया प्रांशुदेशं गतो गुरुपिळ्ळैनामकः । प्रांशुहूणपरिवृढः 'ड्यूक् आप् आर्लियन्स्' इति ख्यातः राजप्रातिनिधिः । प्रत्यग्रनगराधिनाथः प्रेवोस्टियर् नामकः ।

न्यायेति । स्वमात्मानं तिरुवेंकटं निषेवितुमुद्यतमिति अन्वयः । आरात् समीपतः ॥१॥२॥ तस्मिन्निति । सरसे रसिके हृदयालौ । अनुरक्ते प्रेमवति । तस्मिन् तिरुवेंकटे पद्मतुल्ये यच्छ्रीः कृतसन्निधाना तत् स्थान एव । पद्मपक्षे सरसे मरन्दिनि, अनुरक्ते रक्तवर्णवति । अन्यच्च साम्यं विवृणोति मित्रोदय इति । मित्रं सुहृद्, मित्रः सूर्यः पद्मबन्धुः । दोषाकराः दुष्टाः, दोषाकरश्चन्द्रः ॥ ३ ॥ ईदृगिति । ईः लक्ष्मीः, तस्या दृक्कटाक्षः तत्संभूतमीदृग्विभवं ईदृशं स्फीतं विभवमाश्रितः ।

*ईदृक्कटाक्षसंभूतमीदृग्विभवमाश्रितः ।
ईदृक् चकाशे भूपालस्तादृक्ततगुणार्णवः ॥ ४ ॥

आतुषारगिरिसेतुकमुर्व्याम् अध्वनीनजनजीवनहेतोः ।
अभ्युदग्दिशमथो नवपुर्या निर्ममे सुविपुलं सतटाकम् ॥५॥

अधितटाकतटं तिरुवेङ्कटक्षितिपतिः कुटवाटमकल्पयत् ।
विटपजालकनिह्नुतहेलिरुक्प्रचुरपल्लवपुष्पफलायुतम् ॥ ६ ॥

सेव्यानि पान्थनिवहैरतिविस्तृतानि
रम्याणि शीतलतलानि महोन्नतानि ।
अभ्यर्णपुष्पवनमारुतसेवितानि
नानाविधानि स तु सत्त्रवनान्यतानीत्[1] ॥ ७ ॥

---

1. P. says here अकार्षीत्, अतानीदिति च पाठः ।

---

को. टि.

* P. ईः लक्ष्मीः, ईः अब्जदलम् । ता करुणा ।

---

संस्कर्तुष्टीका

ईः अब्जदलं तदिव दृक् यस्य सः । तादृक् ता दया तद्वती दृक् यस्य सः । ततानां विस्तृतानां गुणानामर्णवः ॥ ४ ॥ आतुषारेति अध्वनीना अध्वगाः ॥५॥ कुटवाटं वृक्षवाटिकाम् । हेलिरुक् सूर्यप्रभा ॥ ६ ॥ सेव्यानीति । सत्त्रवनानि गृहवन्ति चत्वराणि ॥ ७ ॥

शर्माणीति । शर्माणि गृहाणि । निर्मायाः छलरहिता गुणोत्तराश्च, तेभ्यः । भर्ममयानि सुवर्णमयानि, अथवा भोजनो-

शर्माणि* निर्माय गुणोत्तरेभ्यो धर्मेण निर्माय ददौ द्विजेभ्यः ।
*शमकैर्भूर्भर्ममयानि हृष्यत्स्वर्माणिनीसादरगीतकीर्तिः ॥ ८ ॥
औदार्यविद्याविनयाभिरूपौ सद्वृत्तिसन्तोषितहूणभूपौ ।
मुहुर्मुहुर्वीक्ष्य सुतौ *सधीतौ[1] तुतोष तातः कृतिनां वरौ तौ ॥९॥
कामावतारः कमनीयरूपे रामावतारो जनरञ्जनेषु ।
आनन्दयामास सदान्तरङ्गम् आनन्दरङ्गः पितुरात्मवृत्त्या ॥ १० ॥
महाभुजाभ्यां स नृपः सुताभ्याम् अभ्यागताशेषबुधादृताभ्याम्[2] ।
बभावुपेन्द्रामरवल्लभाभ्यां प्रभावतः काममिवानघाभ्याम् ॥ ११ ॥
सकलोन्नतनन्दनागमप्रभवानन्दमिहानुभूय सः ।
सुरलोकमगाद् बुधादृतः परमिच्छन्निव तं [3]महामनाः* ॥ १२ ॥
दीनानाथबुधादयो बहुविधा येनाधिकं पालिताः
संसारामृतसागरे विहरता येनानुभूतं सुखम् ।
येनाशेषदिगन्तरेषु निहितं सौजन्यजन्यं यशः
सोऽयं मुक्तिमुपेयिवान् शुभमतिः श्रीवेङ्कटक्ष्मापतिः ॥
पारलौकिककर्माणि चक्रे पितुरुदारधीः ।
विजयानन्दरङ्गेन्द्रो यथाविधि सहानुजः ॥ १४ ॥

---

1. M. wrongly सुधीतौ 2. P. बुधामृताभ्याम् 3. P. महायशाः

---

को. टि.

*. M. शर्म प्रभावः । P. शर्म गृहं सुखं प्रभावश्च
* P. सधीतौ बुद्धितया सहितौ । * P. श्लिष्टम्

---

संस्कर्तुष्टीका

पकरणपूर्णानि ॥८॥९॥१०॥ महाभुजाभ्यामिति । प्रभावतः उपेन्द्रे-

ततः स्वतातस्य दशां निशम्य तत्तादृशीं तान्ततनुर्नितान्तम् ।
निशम्य वाक्यं विदुषां विनीतः संस्तम्भयामास मनः स कृच्छ्रात् ॥

तदनु दुःसहतरजनकनिधनजनितप्रत्यग्रमर्यादातीतावार्यशोकविदार्यमाणधैर्येण सोदर्येण साकम् आर्यजनवदनोद्गतन्यायवचनविदितसकललोकतत्त्वस्थितिः समाहितमनाः स धीरधीः विजयानन्दरङ्गेन्द्रः शाश्वतलोकाधिगमसाधनानि पितुर्बहुविधानि द्विजेभ्यः सदनवसुवसनान्नक्षेत्रादिदानानि विधाय विधिवन्निर्वर्तितनिखिलनैमित्तिककृत्यः समागतैरभिमतैर्वयोबुध्याधिकैः उपहृतशोभनः स्वैःस्वैर्मित्रैरन्यैश्चानुगतः कृतमङ्गलाचारः स्वात्मानं कृतार्थीचकार ॥

आनन्दरङ्गं सदयान्तरङ्गं सानन्दमाहूय ततः शुभाङ्गम् ।
प्रधानमेनं प्रविधाय कार्ये संभावयामास स हूणराजः ॥ १६ ॥

मन्त्रोत्साहपराक्रमैः करुणया धैर्येण गांभीर्यतः
वैदुष्येण नयेन सत्यवचसा सत्त्वेन दानेन च ।
स क्षान्त्या ऋजुताशुचित्वविनयैः सर्वातिशायी महान्
वाग्मी सुप्रतिभश्चकास्ति धरणावानन्दरङ्गप्रभुः ॥१७॥

---

संस्कर्तुष्टीका

न्द्राभ्यामिव स्थिताभ्यां ताभ्यां कामं बभौ ॥ ११ ॥ सकलेति । उन्नतौ गुणोन्नतौ नन्दनौ पुत्रौ, तयोरागमः जन्म तत्प्रभवमानन्दमनुभूय । उन्नताः नन्दनवनस्य अगमा वृक्षाः कल्पवृक्षाः तत्प्रभव आनन्दो यस्य सः तादृशं सुरलोकम्। तं परं परमपुरुषमिच्छन् लब्धुमिच्छन्निव अगात् ॥१२॥ दीनेति । सौजन्यजन्यं यश इति मल्लिनाथादुपजीवितम् ॥१३॥१४॥१५॥

लोकेष्वनुपमानेन तेन कः सदृशः पुमान् ।
यतः स्फुरति सर्वत्र वचनीयं हि वस्तुषु ॥ १८ ॥

तथाहि शतमन्युतया पाकशासनस्य, आश्रयाशतया धनञ्जयस्य, दण्डधारितया विवस्वत्तनयस्य, कीलालपतया प्रचेतसः, प्रभञ्जनतया नभस्वतः, कुबेरतया नरवाहनस्य, विषमदृष्टितया अष्टमूर्तेः, जनार्दनतया नारायणस्य, जलजातजाततया[1] परमेष्ठिनः, तपनतया मिहिरस्य, कलंकितया कलानिधेश्च अन्येषामपि दिविषदामनवरतक्षमास्पर्शवैधुर्येण सर्वोऽपि सुपर्वसमुदायः कृतलक्षणेन तेन उपमानलक्ष्मीमणीयसीमपि धर्तुं न क्षमो बभूव ॥

1. P. जातत्वेन

संस्कर्तुष्टीका

सकललोकतत्त्वस्थितिः जातस्य मृतिरवार्येतिरूपा । उपहृतशोभनः चरमक्रियान्ते शुभस्वीकारदिने दत्तवस्त्रालङ्कारादिकः ॥१६॥१७॥१८॥

शतमन्युतया बहुक्रोधतया । आश्रयाशतया स्वाधारभक्षकतया । धनञ्जयस्य अग्नेः । दण्डः शिक्षणम् । विवस्वत्तनयो यमः । कीलालं जलं रुधिरं च । कीलालं पाति रक्षति इति अप्पतिः वरुणः, कीलालं रुधिरं पिबति राक्षसवदिति वचनीयम् । प्रभञ्जनः भङ्गकारी । कुत्सितं बेरं वपुः यस्य सः, तस्य भावः । नरवाहनः कुबेरः । विषमदृष्टिः त्रिणेत्रः, विषमदर्शनं च । अष्टमूर्तिः शिवः । जनार्दनो जनपीडाकरः । जलजातं पद्मं, डलयोरभेदाज्जलो जडः, तद्भव इति दोषः । मिहिरः सूर्यः । तपनः तापकरः । कलङ्को लाञ्छनं दोषश्च । क्षमास्पर्शः भूस्पर्शः क्षान्तिस्पर्शश्च । कृतलक्षणेन गुणैः प्रसिद्धेन, 'गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ' इत्यमरः ॥

स निर्ममे चारुतया श्रियापि वृत्रारिवित्तेशगृहोपमानम् ।
नवोपकार्यं विलसद्वरूथं वस्त्यं मुकुन्दादिमसन्निधानम्* ॥ १९ ॥

तस्मिन् महारजतराजिविराजमाने सद्मोत्तमे घटितनिस्तुलरत्नजाले* ।
दिव्यं सदस्सुरपतेरिव रङ्गनेतू राजत्युदारसुमनोगणवासितान्तम्* ॥

यस्मिन् वस्तुमनुक्षणं सुमनसो वाञ्छन्ति धर्मोज्ज्वलाः
यत्र प्रोल्लसदप्सरोयुवतयो गायन्ति जिष्णोर्गुणान् ।
यच्च श्रीमदनारतं सुकृतिभिः संसेवितं तत्सदः
शक्तो वर्णयितुं गुरुर्दिविषदामानन्दरङ्गप्रभोः ॥ २१ ॥

---

को. टि.

* P. श्लिष्टम् । * P. जालं गवाक्षम् ।

---

संस्कर्तुष्टीका

स निर्मम इति चारुतया शोभया श्रिया च समृद्ध्या च । उपकार्या राजादिवासयोग्यं स्थानम् । वरूथः प्राकारः वेश्म वा । वस्त्यं गृहम् । मुकुन्दादिमदेवानां पूजागृहे सन्निधानं यत्र तत् । वृत्रारिगृहे इन्द्रवेश्मनि च मुकुन्दादिदेवानां सन्निधानमस्ति । वित्तेशगृहे च मुकुन्दादिनामवन्ति सन्निधानानि श्रेष्ठनिधयो नव सन्तीति श्लेषः ॥ १९ ॥ तस्मिन्निति । जालं समूहः गवाक्षं च । सुमनोगणैः पुष्पसमूहैर्वासितान्तं सुरभीकृतान्तम् । देवगणाध्युषितं च ॥ २० ॥ यस्मिन्नित्यत्रापि देवसभोपमानम् । अप्सरोयुवतयः अप्सरस एव युवतयः, अप्सरस इव वर्तमाना युवतयश्च । जिष्णोः जयशीलस्य, इन्द्रस्य च । सुकृतिभिः कृतपुण्यैः । स्वर्गस्तैः सेव्यते हि । दिविषदां गुरुः बृहस्पतिः ॥ २१ ॥ निर्यत्नमिति तत्र स्थापितघटिकायन्त्रवर्णना । प्रवेशावसरे घण्टाध्वनेः सुशकुनत्वादेवमुक्तिः । रागभङ्गीम् वर्णभङ्गीम्, स्वरभङ्गीं वा ॥ २२ ॥ तस्मिन्निति । बिडौजाः

निर्यत्नं यत्र घण्टा ध्वनति च भवने बोधयन्ती मुहूर्तान्
दैवज्ञान् हर्षयन्ती समयमविरतं ज्ञातुकामानशेषान् ।
प्राप्तुं श्रीरङ्गभूपात् फलमनुदिनमागच्छतां भूसुराणां
तात्सिद्धिं सूचयन्ती प्रकटयतितरामद्भुतां रागभङ्गीम् ॥ २२ ॥

तस्मिन् सदस्यद्भुतधाम्नि सर्वैः संस्तूयमानो विबुधैरुदारैः ।
रेजे बिडौजा इव दिव्यमूर्तिः आनन्दरङ्गाक्षितिपालकोऽसौ ॥२३॥

आनन्दरङ्गे विततान्तरङ्गे* नूनं परं गेयगुणादृताङ्गे ।
जागर्ति लक्ष्मीरनिशं तरां गीः आश्वासिताशेषमनःकुरङ्गी ॥ २४ ॥

अथ कदाचन समन्ततः पल्लवितपटीरमहीधरनितम्बरुहचन्दनकदम्बकविटपकोटीकुटीरविमर्दन[1]विसृत्वरसमीरकिशोरकविसरविधूत[2]चम्पकस्तबकगन्धघुमुघुमायितानन्त[3]सरणिः प्रणयकुपितमानवतीमानोन्मूलनपटुनरदर्पकमहावीराशिततरशरनिकररचनाप्रस्तावकरसहकारमृदुलकिसलयचर्वितगर्वितपरभृतव्रातविरुतश्रुतिचकितहृदयपथिकलोकः स्फुटतर[4]कनत्कमलनिस्तुलविशालकनकमयकन-

1. P. विनिर्गत 2. M. विधुत 3. P. आनन्द 4. M. कनक

को. टि.

* P. श्लिष्टम् । * P. विततान्तरङ्गे विविधवीणादिवाद्यसुन्दररङ्गस्थले ।

संस्कृतटीका

इन्द्रः ॥ २३ ॥ आनन्दरङ्ग इति । वि विविधं ततं वीणावाद्यं, तस्य अन्तः सुन्दरो रङ्गः रङ्गस्थलीभूतः तस्मिन् । अन्तशब्दस्य सुन्दरार्थे 'मृतावववसिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णव इति मेघ (१. २३) माघ (४. ४०) व्याख्यायां मल्लिनाथः । लक्ष्मीः

कालुकासंभृतप्रत्यग्रमधुपानमुदितमांसलमत्तभसलकुलझङ्कारमिषत्रि-भुवनविजयोद्यतमदनकार्मुकटङ्काररवमुखरीकृतनिखिलहरिदन्तरः, निरन्तराराहितरासिकमिथुनश्रृङ्गाररससुरभिः सुरभिसमयः प्रादुरभूत्॥

उपैतुकामा कुसुमद्रुमौघान् क्वणन्मिलिन्दोत्करनूपुराढ्या ।
न्यधात् पदं पद्मवने मधुश्रीः प्रगृह्य चञ्चत्सहकारशाखाम् ॥२५॥

नवतरुणिमलक्ष्मीमुद्वहन्नप्युदारां
मनसि स चकमेऽन्यां स्थायिनीं स्वानुरूपाम् ।
मधुरिपुरिव लक्ष्मीं वक्षसि प्रेक्षणीयां
क्षितिमथ दधदाप्तुं श्रीमदानन्दरङ्गः ॥ २६ ॥

अस्ति हि सद्गुणधन्यजनाढ्यं क्षोणितलेऽनुपमं पुररत्नम् ।
कोकनदं कनदम्बुरुहाढ्यैर्यत्किल भाति सरोवरसङ्घैः॥२७॥

तत्र प्रशस्तविभवो विबुधैकवन्द्यो
हस्तीव नित्यमुरुदानजलार्द्रहस्तः ।

---

संस्कर्तुष्टीका

गीः सरस्वती च आश्वासिताशेषमनःकुरङ्गी अनिशं जागर्तितराम् ॥ २४ ॥ पटीरमहीधरः चन्दनपर्वतो मलयः । सरणिः मार्गः । दर्पको मन्मथः । सहकारश्चूतः । तत्प्रसूनस्य मन्मथबाणत्वात् । कनकालुका भृङ्गारः, पात्रम् । भसला भृङ्गाः । अरहितानि अवियुक्तानि । सुरभिसमयः वसन्तकालः ॥ उपैतुकामेति । मिलिन्दा भृङ्गाः ॥ २५ ॥ नवेति । स्थायिनीं स्थिरां भार्याम् । प्रेक्षणीयां लक्ष्मीं वक्षसि दधदपि मधुरिपुः स्थायिनीं क्षितिमिव चकमे ॥२६॥ कोकनदं 'चेङ्गल्पट्टु' इति ख्यातम् ॥ २७ ॥ तत्रेति । दानजलं

शेषाद्रिनामकनृपाल उदीर्णशक्ति-
रर्णोजबन्धुरिव कश्चिदभूत्सुतेजाः ॥ २८ ॥

कमलनयना काचित्कन्या बभूव मनोरमा
कनकनिकषस्निग्धा शेषाद्रिनामनृपालतः ।
कलशजलधेर्मध्याल्लक्ष्मीरिवाहितलक्षणा
निखिलजगतीमान्या धन्या कलेव कलानिधेः ॥ २९ ॥

स्वकृतपुण्यवशेन सुजातया सुमहिमत्वमगात्स हि जातया ।
क्षितितले तिरुवेन्द्रतनूभवस्तनययेव भुवो मिथिलाधिपः ॥ ३० ॥

मङ्गेति नाम तनुते स्म पिता सुताया
लोकोत्तरानुपमलक्षणलक्षितायाः ।
भृङ्गीकुलाभकुटिलायतकुन्तलाया
रङ्गेन्द्रकुञ्जरमनोहरवाशितायाः ॥ ३१ ॥

दिने दिने सा ववृधे लताङ्गी मङ्गाभिधाना मुदमादधाना ।
पितुः कलेन्दोरिव दर्शनीया कूलंकषस्नेहनिवासभूमिः ॥ ३२ ॥

इत्थम् अनुदिनमुपचीयमानानुपमानावयवशोभिनीम् अनितर-साधारणगुणशालिनीं मनसिजमहावीरचापयष्टिमिव धार्मिकजन-महनीयाम् अतिसुकुमारकुसुमलोभनीयाभिनवोन्मेषयौवनभूषितां

---

संस्कर्तुष्टीका

मदजलं दानजलधारा च । अर्णोजं पद्मम् ॥२८॥२९॥ स्वकृतेति । जातया पुत्र्या । तिरुवेन्द्रतनूभवः शेषाद्रिः । तस्य पितुर्नाम तिरुवेन्द्र इति ॥ ३० ॥ मङ्गेति । वाशिता गजवधूः ॥३१॥३२॥ धार्मिकाः धर्मिष्ठाः धन्विनश्च ।

पोषितरूपानन्दितसकलजननयननिकुरुम्बाम् अधरविडम्बितबिम्बां शम्बरशासनकलम्बकुलायमानचलदपाङ्गतरङ्गां मङ्गाभिधानां स्वतनयां लोकोत्तरे पुंसि निवेश्य तदुपजनितमानन्दमनुभवितुकामः काममशेषबुधजनादृतमहिमा शेषाद्रिनामा दुहितुरभिरूपम् अभिजातं वरम् अन्वेषयामास ॥

यस्याः पद्मदृशः प्रसिद्धमभवल्लावण्यमत्यद्भुतं
यत्सादृश्यपदं सुता हिमवतः श्रीर्वानवद्याकृतिः ।
तामुद्वोढुमिमां मनोभवशरैः आनन्दरङ्गः शितै-
र्विद्धः सिद्धमहौषधीमिव गुणैराढ्यां स चक्रे मनः ॥

प्राप्तः परामथ तदुत्कलिकां पुरस्ता-
दाप्तेन कामसचिवेन नियुज्यमानः ।
स प्राहिणोदभिमतान् सुहृदः समेतान्
शेषाद्रिनामकनृपालसुतां वरीतुम् ॥ ३४ ॥

तदनु ते सचिवाः प्रभुचोदिता विनयगौरवनीतिगुणोज्ज्वलाः ।
सुमतयोऽनघशेषमहीपतेः पुरमगुः किल कोकनदाह्वयम् ॥ ३५ ॥

प्रत्युद्गम्य पुरस्कृतं गुणवता नीता गृहं मानिताः
प्रीतेनाधिगतस्वकीयसकलोदन्तेन शेषाद्रिणा ।
प्राज्यश्रीपरिपूर्णरङ्गनृपतेरर्थैकयोगोद्यता
हृष्यन्तः कुशलानुयोगकुशलाः प्राहुस्तदेतद्वचः ॥३६॥

---

संस्कर्तुष्टीका

कलम्बः सायकः । कुलायः स्थानम् । 'लोकोत्तरे पुंसि निवेश्यमाना कान्तेव' इति प्राचीनश्लोकोऽत्र उपजीवितः ॥ ३३ ॥ प्राप्त इति । तदुत्कलिकां

अस्ति ते दुहितृरत्नमनर्घं यस्य नार्हति कलामपि विश्वम् ।
तत्किल स्वयमवाप्तुमिदानीमीहते विजयरङ्गमहीन्द्रः ॥ ३७ ॥

कुलशीलवपुर्वयोधनैः स्फुरता योगमुपैतु ते सुता ।
[1]श्रुतकीर्तिमतेन्दिरेव भूपतिना सारवता विलासिनी ॥ ३८ ॥

इति सचिवगिरं सुधां किरन्तीं श्रवणपुटेन निपीय हर्षयुक्तः ।
अयमनुमनुते स्म रङ्गनेत्रे दुहितरमर्पयितुं मनोज्ञरूपाम् ॥ ३९ ॥

निश्चित्य पाणिग्रहणोत्सवाय साकं मुहूर्तं स्वजनैः सुतायाः ।
श्रीरङ्गनेतुः सचिवान् गुणाढ्यः स प्रेषयामास कृतोपचारान् ॥४०॥

अथ ते वितथेतरवचनेन तेन विनयवता कृतानुज्ञाः प्राज्ञाः सरभसम् अमात्याः समेत्य प्रत्यग्रपुटभेदनं स्वागमनजनित-कौतुकतरङ्गितान्तरङ्गाय विजयानन्दरङ्गाय यथावृत्तमावेद्य वृत्तान्तं वृत्तसंपन्नस्य शेषाद्रिनाम्नो नृपस्य सुतां तामपि वनितामणिं नितान्तमुपश्लोकयितुमेवं सानन्दमुपक्रममकुर्वन् ॥

गुणेन गौरीं विभवेन लक्ष्मीं लावण्यतः कामसरोरुहाक्षीम् ।
वाणीं मृदुव्याहृतिभिः सुशीलैररुन्धतीमप्यतिराजते सा ॥ ४१ ॥

---

1. P. श्रुति

---

संस्कृतटीका

मञ्जाविषयामुत्कण्ठाम् ॥३४॥३५॥३६॥३७॥ कुलेति । श्रुतं विद्या कीर्तिश्च, तद्वता आनन्दरङ्गभूपतिना । सारवता बलवता । इन्दिरा लक्ष्मीः । श्रुता श्रुतिषु प्रतिपादिता कीर्तिः । तद्वता भूपतिना विष्णुना ॥३८॥३९॥४०॥ गुणेनेति । कामसरोरुहाक्षी रतिम् ॥४१॥ एकत्रेति । तत्र एकत्र वासं लब्ध्वा॥

एकत्र वासं किल काङ्क्षमाणाः सौन्दर्यसम्पन्नयशीलवाचः ।
चिराय लब्ध्वा तमिवात्तहर्षास्तस्यां मृगाक्ष्यां मिलिता वसन्ति ॥

आनन्दरङ्गनृपते बहुभिः किमुक्तैः
शेषाद्रिभूपतनयां रमया सदृक्षाम् ।
[1]प्रत्यङ्गमञ्जनयनां त्वमवेहि बाला-
मेनामशक्यतरवर्णनरूपलक्ष्मीम् ॥ ४३ ॥

इत्थं स तेषां वचनं [2]महार्थं निशम्य वित्तो गुणतः प्रतीतः ।
समीक्ष्यकारी सह बन्धुवर्गैः प्रतीक्ष्यसंबन्धमपेक्षते स्म ॥ ४४ ॥

अथानयामास महोत्सवाय दूतैर्विनीतैः सुहृदश्च बन्धून् ।
साकं कुटुम्बैः कुलशीलवृद्धान् स्निग्धान् मुदान्यानपि रङ्गभूपः ॥

[3]प्राज्ञाय राज्ञे सचिवैः कृतज्ञैः प्रीतैरुपेताय सतां मताय[4] ।
मुदा तदानीमुपदां निधाय व्यज्ञापयत् प्रस्तुतमात्मनस्तत् ॥ ४६ ॥

1. M. corrupt here.
2. M. corrupt here.
3. P. प्राज्ञस्तु
4. P. मतोऽसौ.

संस्कर्तुष्टीका

४२ ॥ आनन्दरङ्गेति । प्रत्यङ्गम् अशक्यतरवर्णनरूपलक्ष्मीमिति अन्वयः ॥ ४३ ॥ इत्थमिति । वित्तः प्राप्तविचार इति यावत् । प्रतीतः प्रसिद्धः । प्रतीक्ष्यसंबन्धं अभिलषणीयसंबन्धम्, श्लाघ्यसंबन्धम् ॥ ४४॥४५॥ प्राज्ञायेति । राज्ञे हूणपतये । उपदाम् उपायनम् ॥४६॥ राजेति ।

राजा स्मृतौ जनक इत्युदितः प्रजा(नां)
यन्निग्रहादवति काममनुग्रहाच्च ।
तस्माद्भवन्तमधिगम्य पितेत्यनुज्ञाम्
उद्वाहमङ्गलकृते नृपतेऽद्य याचे ॥ ४७ ॥

इत्युक्तवन्तं नृपतिर्विनीतं मतौ च वाचस्पतिमात्तहर्षः ।
स्वस्मै हितं प्रेक्ष्य मुहुस्तमेतं मेने सुतं प्रेमरसार्द्रदृष्टिः ॥ ४८ ॥

अथ नृपतिरुदारं श्रीमदानन्दरङ्गं
कनककटकमुक्ताहारकेयूरमुख्यैः ।
बहुभिरतिविचित्रैर्भूषणैर्भूषयित्वा
परिणयनमयि त्वं साधयस्वेत्यवादीत् ॥ ४९ ॥

तदनु सदनुमतावदातनिजचरितवशीकृतनिखिलजन-मनस्कतया सर्वोपश्लोकितनिस्सीममहिमभरितो नितान्तमभीप्सितेषु उद्वाहमङ्गलौपयिकेषु प्रवारयता संभावितः प्रहृष्टेन हूणपतिना सादरमुत्सवोपयोगि[1]कृत्यं साधयध्वमिति केवलं स्वानुकूलान्

---

1. P. gap from here up to निरपायोपायः

---

संस्कर्तुष्टीका

स्मृतौ धर्मशास्त्रे । जनकः पिता ॥ ४७ ॥ ४८ ॥ ४९ ॥ उपश्लोकितः गीतः । उद्वाहमङ्गलस्य औपयिकेषु युक्तेषु वस्तुषु किं किं ते काम्यं तत्तत् स्वीकुरु इति प्रवारयता यच्छता संभावितो हूणपतिनेति अन्वयः । प्रवारणं नाम काम्यदानम् । समीकृतः अनुकूलीकृतः । बिलासपरिवृढः सर्पराजः शेषः । चण्डकिरणकुलावतंसो रामः । सुमित्रानन्दनेन सुवयस्यानन्दनेन सौमित्रिणा च । सोदर्येण तिरुवेङ्कटनाम्ना ।

अमात्यजनाननुप्रेषयता कृताभ्यनुज्ञः प्रज्ञाविशेषसहकृतमनःसमीकृतप्रस्तुतोपयोगिनिरपायोपायः, निरन्तरायपरिणयमङ्गलाभिलाषिभिः[1] मनीषिभिरार्यजनैः कृतस्वस्त्ययनक्रियः, प्रकृतक्रियापरिपन्थिजननिरसनक्षमैः क्षमाभृदनुप्रेषितैः पोषितहर्षैः माननीयः प्रवीरजनैः परिगुप्तः, सर्वतः सरभसमुपागतैः परिवारानुगतैः अधिरूढोत्तुङ्गशताङ्गमातङ्गतुरङ्गैः कमनीयविचित्रविभूषणप्रसाधितोज्ज्वलाङ्गैः पुरस्सरललनाजनाधिष्ठितशिबिकाद्यनेकयानैः प्रमोदविकस्वरनयनैः स्वकीयाभ्युदयकोरकितप्रेमबन्धैः बान्धवैः उदितोत्साहविलसदास्यैः वयस्यैः अन्यैरपि स्वोत्सवावलोकनकूतूहलिभिः अन्वीयमानो विलासिभिः, विलासपरिवृढभोगायतबाहायुगलमण्डितः चण्डकिरणकुलावतंस इव सुमित्रानन्दनेन सन्ततमविनाभूतेन स्वरूपपराकृतमदनसौन्दर्येण सोदर्येण समुदितारुणप्रभाकरप्रतिभटप्रभापाटलिताम् आन्दोलिकाम् अधिरूढः स विजयानन्दरङ्गपरिवृढः प्रस्थानोचितसमयावलोकनजागरूकतरसत्वर सर्वज्ञदैवज्ञावेदितसुमुहूर्तनिस्सृतः प्राश्रितात्मा नगरान्तरात्, निरन्तराहतदुन्दुभिघोषमुखरानिखिलदिगन्तरः हृदन्तराकलितहरिणाङ्कचूडचरणारविन्दस्मरणमङ्गलसिद्धप्रार्थितशुभसूचकभौमदिव्यमृगशकुन्तप्रचरणोपजानितद्विगुणीकृतानन्दभरितस्वान्तः पथि

---

1. M. मङ्गललाभ-

---

संस्कर्तुष्टीका

हृदन्तरेति । शिवस्मरणमङ्गलेन सिद्धं यत्प्रार्थितशुभसूचकभौमदिव्यमृगपक्षिप्रचरणं तज्जनितेत्यादि । स्वागमनागमेति । स्वागमनस्य आगमेन ज्ञानेन प्रमुदितेत्यादि । मनसेवेत्यादि । 'मनसेव कृतां लङ्कां निर्मितां

द्वित्रदिनानि व्युष्य अविलम्बितपुरःप्रेषितदूतनिवेदितस्वागमनागमप्रमुदितान्तःकरणशेषाद्रिरमण[1]चोदितैरमात्यवर्यैः समर्यादं प्रत्युद्गम्य अभिसत्कृतः कोकनदपुटभेदनमेत्य परित्यक्तेतरक्रियाभिः कुलपुरन्ध्रीभिः स्वगाम्भीर्यविभवविलोकनविस्मितहृदयैः पौरजनसमुदयैः मुहुर्मुहुः सादरमवलोक्यमानस्त्रैलोक्यविस्मयनीयां मनसेव निर्मितां विश्वकर्मणा श्रीमतीं भर्ममयीम् उपकाल्पितत्तद्गुणसन्निधानां विविधोपधानपरिस्तोमपर्यङ्कामुपकारिकां प्रदिष्टामवनीपतिना तेन सविनयम् इष्टतमामवजगाहे ॥

सम्प्राप्तं स्वस्य गेहं तदनु नरपतिः शेषनामा समेत्य
प्रीत्याश्लिष्यन् स तूर्णं पदकमलनतं पूर्णकामः कृताशीः ।
सर्वैः स्वीयैः समेतः सदसि मुहुरमुं श्रीमदानन्दरङ्गं
दर्शंदर्शं नितान्तं हृषिततनुरुहं वाचमेतामभाणीत् ॥ ५० ॥

सुकृतमकृत भूयः पूर्वमेषा सुता मे
यदसि तदनुरूपः प्राप्तवांस्त्वं वराग्र्यः ।
अपि च कुलमिदानीं मामकं श्लाघनीयं
जनुरपि चरितार्थं श्रीमदानन्दरङ्ग ॥ ५१ ॥

प्रकाङ्क्षति श्रीमति सद्गुणाकरे प्रतीक्ष्यसंबन्धमुदारयोगिनि ।
महाजनश्लाघ्यतमे महान्वये चिरेण पूर्णोऽद्य मनोरथो हि मे॥५२॥

---

1. M. रमा.

---

संस्कर्तुष्टीका

विश्वकर्मणा' इति श्रीमद्रामायणमत्रोपजीवितम् । उपकारिकां प्रासादम् ॥ ५० ॥ सुकृतमिति । वराग्र्यः श्रेष्ठो जामाता ॥ ५१ ॥ प्रकाङ्क्षतीति ।

इति सविनयमुक्त्वा वाक्यमानन्दरङ्ग-
क्षितिपतिमुरुकीर्तिं मानयन् माननीयम् ।
अधिगततदनुज्ञः प्राप्य सद्मार्थसिद्ध्यै
मनसि नलिननाभं प्रार्थयामास भूयः ॥ ५३ ॥

आलीजनेन रहसि प्रतिवेदितानि
सौन्दर्यसद्गुणविलासगतान्यमुष्य ।
श्रुत्वा वधूर्मुहुरभूद्धृषिताङ्गयष्टि-
रुत्कण्ठिता प्रियकरग्रहणोत्सवाप्त्यै ॥ ५४ ॥

आर्थिसात्कृतबह्वर्थः[1] प्रार्थितस्वेष्टदैवतः[2] ।
उवास वसतिं हृष्टो[3] रङ्गेन्द्रस्तां सहानुजः ॥ ५५ ॥

इति श्रीवत्सकुलतिलकायमान[4]गङ्गाधराध्वरिसुधाब्धिसुधाकरेण
पार्वतीगर्भसम्भवेन श्रीनिवासकविना विरचिते
श्रीमति आनन्दरङ्गविजये चम्पूकाव्ये
चतुर्थः स्तबकः ॥

1. M. corrupt here. 2. M. corrupt here.
3. M. हृष्टरङ्गेन्द्रः 4. P. तिलक

संस्कर्तुष्टीका

उदारयोगिनि। योगो भाग्ययोगः॥ ५२ ॥ ५३ ॥ आलीजनः सखीजनः॥ ५४ ॥ ५५ ॥

इति आनन्दरङ्गविजयचम्पूकाव्ये संस्कर्तू राघवशर्मणष्टीकायां
चतुर्थस्तबकटीका ॥

॥ अथ पञ्चमस्तबकः ॥

अन्येद्युः अन्यादृशोद्वाहमङ्गलसमुचितनैपथ्यसमुज्ज्वलतराङ्गविजयानन्दरङ्गदिदृक्षयेव सरभसमनुरागिणीं कोमलतरकर[1]-स्पर्शसमुदितमुखविकासशोभिनीम् अभिनवमृगमदतिलकाञ्चितभ्रमरकशालिनीं कमलिनीं गाढानुरागतयाश्लिष्य काममतिविततरक्तांशुकोद्भासितस्वीयतनौ अतनुतुङ्गतरपूर्वशिखरिशिखरमध्यमध्यारूढे भगवति वासरपरिवृढे—

उन्निद्रश्रुतिसुखनादवाद्यबृन्दैर्गायद्भिर्मधुरमसौ कुशीलवैश्च ।
पर्यङ्कान्महितजनैः प्रतीक्ष्यमाणः प्रोत्तस्थावुदयगिरेरिवांशुमाली ॥

अथ नृपः कृतमङ्गलमज्जनः स्फुरदमूल्यसुचेलविभूषणः ।
घुसृणचन्दनपङ्कविलेपनैः श्रियमबिभ्रदसौ प्रतिकर्मितः ॥ २ ॥

सदसि निजवयस्यैः सेवितः क्षोणिदेवैः
मधुरललितवाग्भिर्गायकैः स्त्रैणयुक्तैः ।

---

1. M. कलत्रस्पर्श. P. कमृकरस्पर्श

---

संस्कर्तुष्टीका

अस्मिन् पञ्चमस्तबके नायकस्य तद्भ्रातुश्च विवाहः, गार्हस्थ्यम्, कुलवृद्धिः, नायकस्य पुत्रसन्तानप्रस्तावश्च । करस्पर्शः हस्तस्पर्शः किरणस्पर्शश्च । मृगमदतिलकेन अञ्चिता भ्रमरकाः अलिकोपरिलम्बमानाश्चूर्णकुन्तलाः, तच्छालिनीम् । मृगमदतिलक इव अञ्चिता भ्रमरका भृङ्गाः तच्छालिनीं च । अत्र कमलिन्यां नायिकासमाधिः, सूर्ये नायकसमाधिः । अंशुकोऽम्बरं किरणश्च । वासरपरिवृढे सूर्ये ॥ उन्निद्रेति । पर्याङ्कात् तल्पात् ॥ १ ॥ अथेति । घुसृणं कुंकुमम् । प्रतिकर्मितः अलंकृतः ॥ २ ॥ सदसीति ।

बहुभिरवनिपालैर्बन्दिभिर्बन्धुजालैः[1]
हरिहय इव रेजे श्रीमदानन्दरङ्गः ॥ ३ ॥
अत्रान्तरे सरोजाक्षीं सुतां शेषाद्रिभूपतेः ।
सख्यः समेतास्तां मुख्यैरलंचक्रुर्विभूषणैः ॥ ४ ॥
कृतमङ्गलमज्जनोज्ज्वळा विमलक्षौमवती शुचिस्मिता ।
विरराज वधूर्विभूषिता विजयश्रीरिव शम्बरद्विषः ॥ ५ ॥
असहता सततं वदनेन्दुना विरहमन्तिकतः कलितस्थितिः ।
कुटिलकुन्तलसंहतिराबभौ शितिसरोजवनीव मृगीदृशः ॥ ६ ॥
तदनु विजयरङ्गक्षोणिभृत्स्वानुरक्तां
सुतनुमिव सुरम्यां शेषभूपालपुत्रीम् ।
द्युमणिरपि वरीतुं साभिलाषः प्रतीचीं
चरमशिखरिदीव्यद्भद्रपीठं प्रपेदे ॥ ७ ॥
स्वनैल्यसर्वस्वहरं सुकेश्याः कैश्यं तमो जेतुमिव प्रवृद्धम् ।
निरस्तमुद्यद्रजनीकरेण तद्वक्त्रसाम्यं हृदि वाञ्छतेव ॥ ८ ॥

---

1. P. बन्धुभिर्बन्दिजालैः

---

संस्कर्तुष्टीका

स्त्रैणं स्त्रीसमूहः । हरिहय इन्द्रः ॥ ३ ॥ ४ ॥ कृतेति । शम्बरद्विषः मन्मथस्य ॥ ५ ॥ असहतेति । विरहमसहता असहमानेन वदनेन्दुना सततमान्तिकतः कलितस्थितिः संपादितस्थितिः । षहधातुः परस्मैपदेऽप्यास्ति, तथा च 'आ धृषाद्वा' इत्यत्र सिद्धान्तकौमुद्यामेव प्रयोगः प्रदर्शितः 'स एवायं नागः सहति कलभेभ्यः परिभवम्' इति । शितिसरोजवनी नीलोत्पलवनी ॥६। ७॥ स्वनैल्येति । कैश्यं केशसमूहं जेतुं प्रवृद्धमिव स्थितं तमः तद्वक्त्रसाम्याभिलाषिणा चन्द्रेण निरस्तमित्यन्वयः ॥ ८ ॥ मौहूर्तिकः

तत्क्षणमतिविचक्षणमौहूर्तिकाभिहतझल्लरीगभीररावावगत-सुमुहूर्तसमयतया सर्वतस्ताड्यमानेषु भेरीपटहाद्येषु वाद्येषु, सरभसमुपहृतमङ्गलकुसुममालिकाचन्दनपटवासकुङ्कुमाद्यनेकवस्तु-भरितभर्ममयभाजनाञ्चितकरकमलयुगलकुलसीमन्तिनीजालका-लंकृतनासीरैः शुनासीरवदनेकविचित्रनेत्रोज्ज्वलगात्रैः सुचरित्रैः कमलाकरबृन्दैरिव मात्राधिकमित्राभ्युदयविकस्वरनयनारविन्दैः सानन्दैरनुपमसौजन्यधन्यैः मान्यैः जन्यजनैः सप्रश्रयमर्यादमशेषैः शेषाद्रिरलङ्कृतामात्मजातां दातुम् अभ्युद्यतस्तुभ्यमिदानीं प्रति-पालयते तत्रभवन्तं भवन्तं, तदसावनुगृह्यतामिति प्रार्थितः, प्रतीतः सविनयानन्दरङ्गक्षितिपतिः क्षितिलक्षणोपलक्षितप्रेक्षणीयविस्तीर्ण-परिस्तोमास्तृतायां दीप्रतरदीपिकाशतप्रद्योतितायां प्रतोलिकायाम् आन्दोलिकाधिरूढः[1] प्रौढतराङ्गहारचलदुरुतरमणिहार[2] विलसत्कुच-तटवारवधूटीवारकलितललितनटनानि अवलोकनेन संभावयमानः शनैश्शनैः सरन् उभयतस्तुङ्गतरसदनबहिर्वितर्दिकास्थितपौरसार-

---

1. P. अन्दोलिकामधिरूढः 2. M. omits चलदुरुतरमणिहार

---

संस्कृतटीका

ज्योतिर्वित । झल्लरी वाद्यविशेषः । पटवासः गन्धचूर्णम् । भर्ममयं हैमम् । नासीरं गच्छतो बृन्दस्य अग्रभागः । शुनासीर इन्द्रः तस्यानेकानि नेत्राणि, गच्छतां जनानां विषये नेत्रं सूक्ष्मं वस्त्रम् । मित्रः सूर्यः, मित्रं स्निग्धः । जन्याः वरवधूस्निग्धाः । प्रतीतो हृष्टः । क्षितिलक्षणेति । 'महत्या कुथयास्तीर्णा पृथिवीलक्षणाङ्कया' इति रामायणे । प्रतोलिकायां राजवीथ्याम् । आन्दोलिका शिबिका ।

साक्षीनिकरकरसरोरुहविकीर्यमाणाभिनवसुरभिलकुसुमैः अभिवृष्य-माणः समानोन्नतास्निग्धविचित्रतरमुग्धस्तम्भशतशोभितैः कलितमहा-रजतरेखाञ्चलबहुलवितानमालाविलसितैः समन्ततः प्रसरदगरुधूपा-धिवासितः उपान्तासितपृथुलसुरभिलपचेलिमक्रमुकस्तबकनारङ्गना-लिकेरकण्टकिफलांशुमत्फलोल्लसदनुपमफलभरविराजमानैः राजराज-विमानाधिक्रायमानैःकायमानैरलंकृतं स्वलंकृतसञ्चरन्मणिनूपुरवा-चालचरणकमलानेकचेटिकारोप्यमाणदीपिकासहस्रोद्भासितं समाग-तानेकदेशवास्तव्यसमस्तानन्तभोगिभोगायतचण्डभुजदण्डमण्डिता-खण्डाखण्डलवैभवविभवविनिर्जितयक्षराजक्ष्माधिराजराजिविराज-मानोत्तुङ्गानेकरत्ननिकुरुम्बप्रभातरङ्गितभद्रासनसहस्रसंकुलान्तरं मनोहरमधिगम्य विवाहमण्डपमनुगतनिर्भरानन्दसखी[1]जनमालया निजाङ्गनिर्मलकान्तिसुधातरङ्गिणीफेनपुञ्जायमानपृथुलनितम्बबिम्ब-विराजमानमृदुलदुकूलया[2] नीलायतकुटिलकुन्तल[3]भरकलितकुसुम-सौरभलोभभ्रमद्भ्रमरमण्डलया मणिकुण्डलमण्डितगण्डस्थलया अनुपमवरलाभपूर्णमनोरथनिजजनकसविनयसमर्पितया सर्वंसहा-जातयेव निरुपमगुणजातया प्रथमानकेतकदलप्रत्यन्तसन्निभापाङ्गया मङ्गाभिधानया शेषाद्रिकन्यया साकम् अभिनवविरचितरङ्गवल्ली-परिष्कृतायाम् अतिमुदितावनिबृन्दारकबृन्दानुगतपुरोहितसरभस-

1. 2. 3. Gap here in M.

संस्कर्तुष्टीका

मुग्धाः मनोहराः। सितं बद्धम्। कण्टकिफलः पनसः। अंशुमत्फला कदली। राजराजः कुबेरः। कायमानैः तात्कालिककल्पितमण्टपैः। यक्षराजः कुबेरः।

विहिततत्तत्समग्रसंविधानायां[1] [2]कुलपालिकाकरपल्लवार्पिताभिनव-
नवांकूरसाधनद्रव्यसंभृतकनकमयपालिकायां कल्याणवेदिकायां
भद्रपीठे भद्रगुणः [3]स्वलंकृतः उपविशति स्म ॥

अथ विधिवदभिज्ञैर्भूसुरैः साकमाप्तैः
हुतवहमधिवेदि स्थापयित्वा पुरस्तात् ।
कुसुममलयजाद्यैरर्चयित्वा समिद्धं
स्वयमतनुत होमं स्त्रीसखः पूर्णमाज्यैः ॥ ९ ॥

वध्वास्समिद्धत्युरुहर्षमस्या धनञ्जये साक्षिणि रङ्गभूपः ।
जग्राह पाणिं वनितप्रभावः करेण शच्या इव देवराजः ॥ १० ॥

तदनु सा पृथुमौक्तिकमालया स्फुरदुरस्स्थलमेत्य रमालया ।
विजयरङ्गमभाद्वनमालया हरिमिवोल्लसितं गुणमालया ॥ ११ ॥

स तं परिक्रम्य वधूसहायः त्रिरग्निमुद्यच्छिखमूर्जितश्रीः ।
जुहाव लाजान् सुदृशश्च्युतानि मुक्ताफलानीव भुजेक्षुकाण्डात् ॥

काठिन्यमुच्चकुचयोः सरसीरुहाक्ष्या
जेतुं सदोगतमिव स्वकरोद्धृतेन ।
अश्मानमुन्नतमसौ चरणेन तस्याः
कुर्वन् प्रहर्षमधिभूरधरीचकार ॥ १३ ॥

1. 2. 3. Gap here in M.

संस्कर्तुष्टीका

सर्वंसहाजातया सीतया । रङ्गवल्ली धूलिचित्रं रसाचित्रं च, 'कोलम्' इति भाषायां प्रसिद्धम् ॥ ९ ॥ वध्वा इति । समिद्धति धनञ्जये अग्नौ साक्षिणि सति । वनितप्रभावः स्पृहणीयप्रभावः ॥ १० ॥

स्फीता दुन्दुभयो विनेदुरभितः स्निग्धं जगुर्गायकाः
पश्यन्तः परमोत्सवं जय जयेत्यस्तौषुरन्ये मुदा ।
अन्यूनानि ववर्षुरम्बुजदृशः पुष्पाणि पृथ्वीसुराः
शेषाद्रेर्दुहितुर्धृते नृपतिना पाणावशेषाशिषः[1] ॥ १४ ॥

प्रदाय कन्यामगमत् प्रमोदमानन्दरङ्गाय स शेषभूपः ।
कन्यामवन्या इव मैथिलेन्द्रो भास्वत्कुलोत्तंसरघूद्वहाय ॥ १५ ॥

तस्मिन् महोत्सववरे मनुजाः समस्ताः
शेषाद्रिनाम्नि नृपतौ द्विजवर्यपूर्वाः ।
विश्राणयत्यधिकमापुरवाप्तकामाः
प्रीतिं परां बहुविधानि धनान्यवाप्य ॥ १६ ॥

यौतकानि स ददौ स्वसुतायै स्फीतसंपदथ[2] शीलनुतायै[3] ।
प्रस्तुतं विजय[4]रङ्गमितायै निस्तुलोरुकुचभारनतायै ॥ १७ ॥

---

1. M. पाणावशेषाशिषा. P. पाणौ च शेषाः शुभाः
2. 3. 4. Gap here in M.

---

संस्कर्तुष्टीका

तदन्विति । पृथुमौक्तिकमालया स्फुरदुरस्स्थलं गुणमालया उल्लसितं विजयरङ्गमेत्य सा रमालया लक्ष्मीनिवासभूता मञ्जा वनमालया उल्लसितं हरिं, अलया नाशरहिता रमा लक्ष्मीः इव अभादित्यन्वयः ॥११॥ स तामिति लाजहोमः ॥१२॥ काठिन्येति अश्मारोपणम् । सरसीरुहाक्ष्याः कुचकाठिन्यं जेतुं सदोगतामिव स्थितमश्मानं तस्याः चरणेनैव स्वकरोद्धृतेन अधरीचकार । अधिभूः अधिपः । अश्मनो धार्ष्ट्यात् तदुपरि तत्पदस्यैव न्यासेन दण्डयामासेति भावः ॥१३॥ स्फीता इति । पृथ्वीसुरा अशेषाशिषो ववर्षुः॥१४॥

यथोचितमुपागतानभिमतान् धराधीश्वरान्[1]
विधाय विविधैर्धनै[2]र्विहितसत्कृतीन्[3] सत्कृती[4] ।
सुहृत्स्वजनसंवृतश्श्वशुरपूजितः स्वं ततः
पुरन्दरपुरोपमं पुरमगात् पुरन्ध्रीसखः ॥ १८ ॥

आरूढोत्तुङ्गमत्तद्विरदहयरथा[5]न्दोलिकैर्मौलिकाभिः
भूषाभिर्भूषिताङ्गैः सरभस*नृपतिप्रेषितैर्मन्त्रिवर्गैः ।
प्रत्युद्गच्छद्भिरन्यैः[6] प्रमुदितहृदयैः साकमार्यै[7]र्विवेश
श्रीमद्वास्त्यं प्रशस्तं स मुदितललनः श्रीमदानन्दरङ्गः ॥

प्रविश्य गृहमात्मनः सदसि भासुरैर्भूसुरैः
[8]यथाविधि वधूसखः[9] कलितमङ्गलाशीरयम् ।
सभासद उदारधीर्विजयरङ्गभूपोऽर्चितान्
मुदाकृत कृतागमानुचितवस्तुभिः प्रस्तुतः ॥ २० ॥

---

1. M. धराधीश्वरात्. P. धराधीश्वरा. 2. 3. 4. 5. Gap here in M. 6. M. आर्यैः 7. M. अन्तः 8. 9. Gap here in M.

---

को. टि.

* P. रभसो हर्षः ।

---

संस्कर्तुष्टीका

१५ ॥ तस्मिन्निति । विश्राणयति दानं कुर्वन्ति । प्रीतिं परामापुरिति योजना ॥ १६ ॥ यौतकानि स्त्रीधनानि । स्फीतसंपत्स शेषाद्रिः । प्रस्तुतं प्रकर्षेण स्तुतम् विजयरङ्गमितायै प्राप्तायै ॥ १७ ॥ १८ ॥ आरूढेति । वास्त्यं वासभवनम् ॥१९॥ प्रविश्येति । कृतागमान् आगतान् कृतविद्यान् वा सभासद उचितवस्तुभिः अर्चितान् मुदा अकृत इत्यन्वयः ॥ २० ॥

जातिसत्त्वगुणदेशज[1]धर्मचेष्टितप्रकृतिभावकलासु ।
इङ्गिते च निपुणः स्मरमूर्तिः बालया सह तया रमते स्म* ॥२१॥

सा बाला घनसारदेवकुसुमैः जातीफलैः स्वादुभिः
ताम्बूलैर्हरिचन्दनैः फलरसैः [2]नानाविधैर्माननैः ।
[संमानचाटूक्तिभिरिति वा]
साध्वी मन्मथसुन्दरीव सुतरामानन्दरङ्गप्रभुं
सन्तुष्टारमयत् सदा सुमनसां मालाभिरावर्जिता ॥ २२ ॥

---

1. M. corrupt and incomplete here.
2. P. has संमानचाटूक्तिभिः

---

को. टि.

* M. जातिरिति । जातिः पद्मिनी-चित्रिणी-शङ्खिनी-हस्तिनीत्यादिका । जातिपदेन तल्लक्षणा । तत्र निपुणः परिज्ञाता । 'कमलमुकुलमृद्वी फुल्लराजीवगन्धः सुरतपयसि यस्याः सौरभं दिव्यमङ्गे' इत्यादिना पद्मिनी-लक्षणमुक्तं रतिरहस्ये । एवं 'सुगतिरनतिदीर्घा नातिखर्वा' इत्यादिना चित्रिण्यादिलक्षणमप्युक्तम् । एवं वात्स्यायनोक्तं मृग्यादिलक्षणं च । तत्र कुशलः । सत्त्वं सत्त्वजातिः, देवसत्त्वा गन्धर्वसत्त्वा नरसत्त्वा गर्दभ-सत्त्वा इत्यादि । तल्लक्षणं तत्रैवोक्तम् ।

P. अयमर्थो रतिरहस्ये द्रष्टव्यः ।

---

संस्कर्तुष्टीका

जातिरिति । अत्र प्रथमपादान्ते लघुरयुक्तः ॥ २१ ॥ सा बालेति । घनसारः कर्पूरम् । देवकुसुमं लवङ्गम् ॥ २२ ॥ प्राज्यश्रीः प्रभूता संपत् । तत्कारणात् सुलभतरेष्टदिव्यभोगौ । भद्रश्रीः चन्दनम् । घुसृणं कुंकुमम् ॥ पौलोमी इन्द्राणी । वलमथन इन्द्रः ॥ २३ ॥

प्राज्यश्रीसुलभतरेष्टदिव्यभोगौ[1]भद्रश्रीघुसृणकपङ्कचर्चिताङ्गौ ।
मङ्गाम्बामनुजवरौ महत्सुखं तौ पौलोमीवलमथनाविवान्वभूताम् ॥

नियतमित्थमसौ शुचिरातमवान् सुकृतमर्थममोघमतिः पटुः ।
विषयमप्यनघः स्म निषेवते विजयरङ्गनृपो ललनासखः ॥ २४ ॥

आहूय रङ्गेन्द्रमथ प्रहृष्टो हूणाधिपः प्राह कदाचिदेवम् ।
स्वकार्यनिर्वर्तनजागरूकं स्वकार्य*संवर्धन[2]कल्यमेनम् ॥ २५ ॥

यतस्तत्तत्कार्ये सततमतिदक्षः कृतमतिः
प्रजायोगक्षेमे व्यपनयसि चिन्तामपि पराम्[3] ।
हितं त्वामासाद्य ध्रुवमतुलमानन्दमगमं[4]
यथोपेन्द्रं शक्रः सुकृतनिजकृत्यं गुणनिधिम् ॥ २६ ॥

वित्तान्युपादाय बहूनि गत्वा विचित्रवस्त्वाकरहूणखेटम् ।
व्यापारतस्तत्र बहुप्रकारं *वित्तिं प्रवृद्धामयि साधयेति ॥ २७ ॥

---

1. M. सुलभतरेष्टभोगौ P. सुलभरतेष्टदिव्यभोगौ
2. P. कल्पम् 3. M. पुरा. 4. Gap here in M.

---

को. टि.

* P. अर्या वैश्याः । * M. वित्तिः लाभः ।

---

संस्कर्तुष्टीका

नियतमिति । नियतं यथानियमम् सुकृतं सन्मार्गागतमर्थं, विषयं काममपि ॥ २४ ॥ आहूयेति । स्वकार्यसंवर्धनकल्यं स्वकाः अर्या वणिजः तत्संवर्धने कल्यं दक्षम् ॥ २५ ॥ २६ ॥ वित्तानीति । हूणखेटः 'पराङ्गिप्पेट्टै' इति ख्यातो हूणवणिङ्निवासभूतः प्रदेशः ॥ २७ ॥ तदीरितामिति । निजाधिकारे दक्षैस्सह अनुजं नियुज्य हूणपुरं प्रपेदे ॥ २८ ॥ दक्ष इति

तदीरितं तेन निशम्य वाक्यं कृताभ्यनुज्ञः प्रगृहीतवित्तः ।
निजाधिकारे स नियुज्य दक्षैः सहानुजं हूणपुरं प्रपेदे ॥ २८ ॥

दक्षः श्रीवेङ्कटेन्द्रस्तदनु तदनुजः शीलवान् स्थूललक्षः
श्रीमान्[1]स न्यायवादी समुदितकरुणः सूक्ष्मधीः स्फीतकीर्तिः ।
स्वोद्यत्प्रेमानुबन्धान्[2]खिलतनुभृतः पालयन् लीलयैव
स्फारप्रीतेर्नृपालाद्गुरुतरमगमन्माननं माननीयः ॥ २९ ॥

स खलु पुनः धीरो हि मानी हिमानीमहीधर इव सकलतपस्विशरणम्, उदधिरिव कलाधरपादवंशाभिवृद्धः, शिव इव वृषाङ्कः, वृष्णिपुङ्गव इव धार्मिकनरमात्रहितैषी, द्रुहिण इव अनवरताकलितसत्यस्थितिः, सुरभिसमय इव कुसुमहितः, जिष्णुरपि न कश्यपान्वयी, भोगवानपि न पर्वनिर्मुक्तः, कलानिधिरपि न कलङ्की, पराक्रान्तोऽपि सन्ततनिगृहीतारिः, शक्तिधरोऽपि न विकृतगतिः, शुचिरपि अमोघागमविकासी, निरस्तसमस्तानियैः, निश्शेषगुणगणरत्नाकरः सर्गातिशायी सर्वविस्मयनीयचरित्रः चिरम् अमितंपचां प्रजानां मुदमुत्पादयामास ॥*

सत्रानुकूलैः सचिवैर्यथावद् आनन्दरङ्गः क्षितिभृन्नियोगम् ।
तत्राप्रमत्तः प्रथितात्मवृत्तश्चक्रे स शक्रप्रतिमप्रभावः ॥ ३० ॥

1. P. तु 2. M. corrupt here.

को. टि.

* P. तपस्विनो मुनयो दीनाः ।

संस्कर्तुष्टीका

आनन्दरङ्गानुजस्य तिरुवेङ्कटस्य गुणकीर्तनम् । श्रीवेङ्कटेन्द्रः तिरुवेङ्कटः ॥२९॥

स्वलंकृतवपुः सदा वसनभूषणैर्मञ्जुलै-
मनोहरकुशीलवाकलितगानलोलान्तरः ।
बुधैः कविभिरीडितः श्रुतपुराणनानाकथः
प्रथामपि परामगात् स मुदितो वदान्याग्रणीः ॥३१॥

अधिगतबहुलार्थः[1] पोषिताशेषलोको
द्विजगुरुसुरपूजाश्रद्दधानो मनीषी ।
विधुरिव निखिलानामादधानः प्रमोदं
समयमयमनैषीत् तत्र कश्चित् प्रतीतः* ॥ ३२ ॥

---

1. M. अर्थापोषित

---

को. टि.

शरणं गृहं रक्षकश्च । गर्भधारकपिता कलाधर इति । पादः पूज्यः परः । तस्य वंशे कुलेऽभिवृद्धः । अन्यत्र चन्द्रकिरणपरंपरया अभिवृद्धः । वृषः उक्षा धर्मश्च । धार्मिको धन्वी नरः अर्जुनः । मात्रपदमेवकारार्थकम् । तस्यैव हितामिच्छति । अन्यत्र धार्मिका धर्मिष्ठाः कृत्स्ननराः तेषां हितैषी । सत्यलोके स्थितिर्यस्य । सत्यं सत्यवचनम्, स्थितिर्मर्यादा । कुसुमहितः भूमण्डले प्रसिद्धः, पुष्पेभ्योऽनुकूलश्च । जिष्णुरिन्द्रः जयशीलश्च । कश्यपाः मद्यपायिनः । भोगवान् सुखी सर्पश्च । पर्वभिः उत्सवेन निर्मुक्तः । परैः शत्रुभिराक्रान्तः परम(पराक्रम)शाली च । विकृतगतिः विकारयुक्तगमनः, मयूरकृतगमनश्च । शुचिः शुद्धः ग्रीष्मश्च तत्र मोघागमानां पाटलवृक्षाणां विकासो नास्ति । अन्यत्र आगमः जीविका विद्या । अमोघः सार्थकः । निर्या दोषः ।

* P. विधुपक्षे बहुले कृष्णपक्षे अर्थो निवृत्तिः । शेषलोकः पातालम्, तद्भिन्नः अशेषलोकः ।

अथानन्दरङ्गः प्रधानैरुपेतः स निर्वर्त्य सर्वं पुनः कार्यजातम् ।
प्रयातुं प्रवृत्तो वियोगासहिष्णून् समाधाय पौरान् समायात् पुरं स्वम्॥

तदनु स रङ्गमहीन्द्रो बुद्धावतितोषितान्तरङ्गमहीन्द्रः ।
हूणपमर्यकसार्थश्रितमुपगत्या[1]ब्रवीत् कृतार्यकसार्थः* ॥ ३४ ॥

अयि नृप साकल्येन स्वनुष्ठिताज्ञा मयाद्य सा कल्येन ।
स्वीकुरु धनजातानि न्यायसरण्यैव मानधन जातानि ॥ ३५ ॥

1. P. उपगम्य

को. टि.

* P. कृतमर्यकं शुत्रुक्लेशः येन सः तथोक्तः । सार्थः सधनश्च ।

संस्कर्तुष्टीका

सत्रेति । सचिवैः सत्रा सह । तत्र हूणखेटे ॥ ३० ॥ ३१ ॥

आर्धिगतेति । अर्थो निवृत्तिः । 'अर्थः फले' इत्यारभ्य 'कार्यैश्वर्यनिवृत्तिषु' इति केशवस्वामी ॥ ३२ ॥ अथेति । प्रधानैरमात्यैः । प्रयातुं हूणखेटादिति शेषः । पुरं स्वं नूतनपुरम् ॥ ३३ ॥ तदन्विति । बुद्धौ अहीन्द्रः शेषः अतितोषितान्तरंगम् अर्यकसार्थश्रितं वाणिक्समूहाश्रितं हूणपमुपगत्याब्रवीत् । कृतार्यकसार्थः कृतारिक्लेशः । 'अकं दुःखाघयोः' इति हेमचन्द्रः । सार्थः सधनश्च । रङ्गमहीन्द्रविशेषणमिदम् ॥ ३४ ॥ अयीति । सा आज्ञा कल्येन दक्षेण मया साकल्येन अनुष्ठिता । हे मानधन ! न्यायसरण्यैव जातानि धनजातानि धनसमूहान् स्वीकुरु ॥ ३५ ॥ इत्थमिति । समुदितवार्तमुक्तवृत्तान्तम्, आरोग्यसंपन्नं च । नृणां जनानां अमृदुदरहा अमृदु तीव्रं दरं भयं हन्तीति अमृदुदरहा । स हूणपतिरिति योजना ॥३६॥३७॥३८॥३९॥४०॥

इत्थं समुदितवार्तं हूणपतिस्तमभिपूज्य समुदितवार्तम् ।
अवदन्मृदुदरहासाश्रिया ज्वलन्तं नृणाममृदुदरहा सः ॥ ३६ ॥
भ्राता तवायं तिरुवेङ्कटाख्यः प्रभावयुक्तः [1]पुरि मन्त्रियुक्तः ।
यतः प्रजानां हितकार्यभिज्ञस्तत्प्रक्रियामत्र[2] तनोतु सर्वाम् ॥ ३७ ॥
सदा समेतौ सुमती विनीतौ स रङ्गभूपस्तिरुवेङ्कटश्च ।
यथानियोगं नृपतेरभूताम् अशेषकार्येषु किलाप्रमत्तौ ॥ ३८ ॥
विमुखं तु विवाहमङ्गले सहजं वीक्ष्य स रङ्गभूपतिः ।
अतनोदथ तं तदुन्मुखं वचनैर्न्याययुतैः स्मृतीरितैः ॥ ३९ ॥

ततो देशेषु सचिवैरनुजस्यानुरूपिणीम् ।
कन्यामन्वेषयामास विजयानन्दरङ्गराट् ॥ ४० ॥

पितृव्यपुत्र्याः सदृशो मदीयो देवेति चित्ते बहुशो विचिन्त्य ।
शेषाद्रिकन्या पतिमात्तहर्षा [3]व्यज्ञापयत् प्रस्तुतकार्ययत्नम् ॥ ४१ ॥

हैयङ्गवीनमधिपाणि विधाय भूयः
खेटे घृतं मृगयतः पुरुषस्य रीतिः[4] ।
सत्यां पितृव्यदुहितर्यपि संमितायां
भो जानताप्यनुसृता भवतेह भाति ॥ ४२ ॥

---

1. M. परमं नियुक्तः 2. M. अद्य
3. M. corrupt here. 4. M. wrongly रीतिम्

---

संस्कर्तुष्टीका

पितृव्येति । देवा देवरः पत्युर्भ्राता । शेषाद्रिकन्या आनन्दरङ्गपत्नी ॥ ४१ ॥
हैयङ्गवीनमिति । नवनीतं करे निधाय खेटे गोकुले घृतं मृगयतो रीतिः भवता अनुसृता भाति । पितृव्यदुहितरि शेषाद्रिभ्रातुः 'नाचणपिळ्ळै'नाम्नः पुत्र्याम् । संमितायां तुल्यायाम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

सुदृशः स निशम्यैतदमृतस्यन्दि भाषितम् ।
सुहृन्मुखेन सुप्रीतस्तामयाचत सुन्दरीम् ॥ ४३ ॥

शेषाद्रिस्तदनु निजानुजस्य कन्यां श्रीरङ्गक्षितिपसहोदराय तस्मै ।
दातुं तां मुदितमनास्तमाप्तवर्गैरानेतुं सरभसमादिशत् स्वकीयान् ॥

आहूतैः सविनयमाप्तबन्धुवर्गैरारूढद्विरदतुरङ्गचक्रयानैः ।
सामात्यः सह सहजेन रङ्गनेता हृष्यन् कोकनदमवाप सावरोधः ॥ ४५

हृष्टः शेषाद्रिभूपः शुभतरसमये श्रीमदानन्दरङ्ग-
भ्रात्रे स्वीयानुजस्य स्थिरमतिरददात् कन्यकां धन्यमूर्तिम् ।
प्राप्य श्रीवेङ्कटेन्द्रः सुदृशमनुपमां तामभात् कर्बुराभां
कल्याणीं कार्तिकेयः प्रथितगुणयशा देवसेनामिवासौ ॥ ४६ ॥

सम्यङ् निर्वर्तयामास पाणिग्रहणमङ्गलम् ।
प्रणीताशेषमनुजम् अनुजस्य स रङ्गराट् ॥ ४७ ॥

अत्यद्भुतोद्धवनिरीक्षणजातहर्षान्
संभाव्य साधु सुहृदः स्वजनान् जनेशान् ।
आनन्दरङ्गनृपतिर्नवराजधानी-
मागाद्वधूवरयुतः परिपूर्णकामः ॥ ४८ ॥

सौन्दर्यदाक्षिण्यनिधी समेतौ सौशील्यगाम्भीर्यगुणार्णवौ तौ ।
वधूवरौ प्रेमरसार्द्रभावौ रतिस्मराभौ सुखमन्वभूताम् ॥ ४९ ॥

---

संस्कर्तुष्टीका

कर्बुराभां हेमकान्तिम् ॥४६॥४७॥ उद्धव उत्सवः ॥४८॥४९॥ रङ्गनेतुरिति । योषिति अलमेलुमङ्गानाम्न्यां पत्न्याम् । वालवायजम् इन्द्रनीलरत्नम् ।

रङ्गनेतुरथ योषिति[1] कन्यारत्नमुज्ज्वलमभूद् गुणधाम ।
प्रीणिताखिलजगद्धनघोषाद्[2] [3]वालवायजमहार्यभुवीव ॥ ५० ॥

तदातिहर्षेण सदातिसातिस्फात्यार्यमापत्यसमप्रभावः ।
स्फीतानि रत्नानि वितीर्य चक्रे सर्वातिथिः सर्वजनान् स तृप्तान् ॥

अथ कदाचित् इत्थमनुदिनमनुभूयमानानितरसाधारणनानाविषयशातं *सदावनपरिपुष्टमनोज्ञसारङ्गजातं विजयानन्दरङ्गजीमूतं सर्वतः सर्वदा पर्वतस्फीतकनकवर्षाणि अभिवर्षन्तं सहर्षं तमभिवीक्ष्य चपलाशयतया स्वयमपि तथा भवितुमिव साहसेनोद्यतैः सद्योदितमानवतीरतिकलहैः स्तानितमुखराम्बरैः हरिदैक्य[4]मिव कुर्वद्भिरम्बुधाराः प्रवर्षद्भिः बलाहकैः सकलापिहितः[5] स कलापिहितः स्फुरितमालतीकुटजकेतककुभकुसुमगन्धिमदबम्भरविरुतस्फीतपौरस्त्यघनमारुतप्रसरसमेधितप्रतापपञ्चशरनृपशासनवशंवदपथिकलोकस्सुखालोकः प्रावृट् प्रादुरभूत् ॥

---

1. 2. 3. M. corrupt here.
4. M. दैत्यम् 5. M. omits one सकलापिहितः

---

को. टि.

* P. सदावनपरिपुष्टेत्यत्र अर्थत्रयं द्रष्टव्यम् ।

---

संस्कर्तुष्टीका

अहार्यभुवि पर्वतभुवि । वालवायो नाम विदूरपर्वतः यदान्तिकभुवि घनगर्जिते सति इन्द्रनीलरत्नमुद्भिद्यत इति उच्यते । यथाह कालिदासः कुमारसंभवे 'विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव' इति ॥ ५० ॥
तदा अतिहर्षेण सदा अतिसातिस्फात्या । 'सातिर्दानावसानयोः' इति हेमचन्द्रः । अतिदानवृद्ध्या । अर्यमापत्यसमप्रभावः कर्णतुल्यप्रभावः ॥५१॥

यत्र च सन्ततघनतरघनान्धकारतिरोहितनिखिलहरिदन्तरतया कृतसमयप्रियतमनिश्शङ्ककृताभिसरणकामिनीजनमनोविकासमये समये प्राप्ताभिनवलक्ष्मीकदुर्विनीतजनमनांसीव निम्नगाम्भांसि उन्मार्गवाहीन्यभवन्। अतिमलिनैः घनैःनिर्मलोऽपि चन्द्रमाः मूर्खजनप्रगल्भोक्तिनिरन्तरितसद्वादिवाद इव न रराज[1] । अविवेकिनृपपरिगृहीतेन निर्गुणेनेव तादृग्विधेन[2] शक्रायुधेन सत्पदमवाप्तम्। दुर्वृत्तेषु [3]कुलीनचेष्टेव मेघाभिवृष्टपङ्किलप्रदेशवृत्तिः बलाकावलिरतिशोभना [4](न) बभासे। लोकोत्तरपुरुषेषु दुर्जनप्रयोजिता मैत्रीव अतिचञ्चला विद्युत् न बबन्ध स्थैर्यं गगनतले। अर्थान्तरमिताः प्रगल्भोक्तिगुम्फा इवाभिनव[5]बालतृणावृता मार्गा बभूवुरस्पष्टाः ॥

---

1. Gap here in M. 2. Missing in M.
3. Both M. and P. wrongly दुष्कुलीन
4. 'न' missing in both M. and P. 5. M. corrupt here.

---

संस्कर्तुष्टीका

शातं सुखम्। सदा वनेन जलेन परिपुष्टः। मनोज्ञसारङ्गस्य मनोहरशबलवर्णस्य समूहो यस्यः सः मनोज्ञसारङ्गजातः। सदा वनपरिपुष्टश्चासौ मनोज्ञसारङ्गजातश्चः, तम्। अन्योऽर्थः सदा वनेन जलेन स्वदत्तेन परिपुष्टं मनोज्ञसारङ्गजातं मनोज्ञचातकसमूहः येन सः, तम्। विजयानन्दरङ्ग एव जीमूतो मेघः, तम्। नायकपक्षे जीमूतः पोषकः। सदा अवनेन संरक्षणेन परिपुष्टा मनोज्ञाः सारङ्गा सारग्राहिणो विद्वांसः तेषां जातं समूहो येन सः, तम्। मेघानाम् आनन्दरङ्गसाम्यस्पृहा वर्ण्यते। चपलाशयतया आशय आश्रयः। विद्युदाश्रयतया चपलमनस्कतया च। 'अथाशय आश्रये। अभिप्राय' इति हेमचन्द्रः। सद्योदितेति। दितः खण्डितः। कलया सह वर्तत इति सकलश्चन्द्रः। तस्य अपिहितं अपिधानं भावे क्तः अस्मिन् सः सकलापिहितः। स प्रावृट्कालः

उन्मत्तशिखिसारङ्गे तस्मिन् काले मनोरमे ।
रङ्गराट् सुखमत्यन्तमन्वभूद्वनितासखः ॥ ५२ ॥

वल्गद्वल्गुपयोधरा रसवती नीलाम्बरालङ्कृता
प्रोन्मीलत्सुमनाः प्रवृद्धमदना केकिस्फुटालापिनी ।
[1]पुष्यत्कैतकसौरभाञ्चिततनुः सानन्दरङ्गप्रभुं
कान्तेव प्रियमूर्जितश्रियममुं प्रावृट् प्रतीतं* व्यधात् ॥ ५३ ॥

तस्मिन् काले द्विजाना[2]मसुवसतिजुषां शीतिकाबाधितानां
साधूनां रक्षणार्थान्यतनुत भवनान्यद्भुतान्यन्नवन्ति ।
वस्त्रैः श्रेष्ठैरनेकैरनुकलमपि च श्रीमदानन्दरङ्गो
धीमान् दीनाननाथान् स्वयमिव मुदितान् राङ्कवक्षौममुख्यैः ॥

ललितहंसगतिः पुलिनोल्लसज्जघनवत्यथ काशदुकूलभृत् ।
विकचपद्ममुखी शरदङ्गना रमयितुं नृपमेनमुपागता ॥ ५५ ॥

---

1. M. पुष्प्यत्केतक- 2. M. corrupt here.

---

को. टि.

* P. प्रतीतः हृष्टः ।

---

संस्कर्तुष्टीका

कलापिनां मयूराणां हित इति कलापिहितः ॥ बंभरा भृङ्गाः । यत्र चेति । निर्गुणेन गुणशून्येन । जनेन तादृग्विधेन गुणरहितेन ज्यारहितेन शक्रायुधेन इन्द्रधनुषा । सत्पदं शोभनं स्थानं सतामेवोचितं स्थानं वा, व्योम च ॥ उन्मत्तेति ॥५२॥ वल्गदिति । वल्गुः मनोहरः । पयोधरः मेघः वक्षोजश्च । रसवती जलवती रसिका च । नीलाम्बरं घनैर्नीलं व्योम नीलवर्णं वसनं च ॥ ५३ ॥ तस्मिन्निति । असुवसतिजुषाम् न सुवसतिजुषोऽसुवासितजुषः, तेषाम् ।

अब्जकोशस्तनीमेनां प्रत्युत्कं रङ्गभूपतिम् ।
वीक्ष्य क्रुद्धेव निरगात् प्रावृड् लम्बपयोधरा ॥ ५६ ॥

आनन्दरङ्गनृपवद्बहुजीवनानि
दातुं सदाऽक्षमतया त्रपयेव लीनः ।
आसीद्वलाहककणो महतां हि रीति-[1]
[2]नैवाप्यतेऽ[3]भिलषतापि जडाशयेन ॥ ५७ ॥

आसीन्निर्मलमम्बरं मन इव श्रीरङ्गनेतुर्महत्
तत्संपत्तिरिवाभिवृद्धिमगमत् क्षेत्रेषु सस्यावलिः ।
हंसास्तत्र तदाश्रिता इव जना हृष्टा बभूवुस्तरां
भ्रष्टश्रीरदसीयशत्रुततिवज्जाता मयूरावलिः ॥ ५८ ॥

इत्थमनेन परस्परविजीगीषुपार्थिवजैत्रयात्रानुकूलेन रममाण* विशेषेण योषिदिव भूषणविशेषेण अलंकृता अलंकृतविजयानन्द-रङ्गमनोविकासा *विकासोज्ज्वलचन्द्रहासवती वसुमती बभूव ॥

1. P. रीतिम् wrongly. 2. P. चैव wrongly. 3. M. आभिलषितापि

को. टि.

* M. रममाणविशा इषेणेति विभागः । P. इषेणेति विभागः । विशो वैश्याः । * P. विकासः आकाशः ।

संस्कर्तुष्टीका

उचितगृहविहीनानामिति यावत् । राङ्कवं रङ्कुमृगरोमानिर्वृत्तं कम्बलम् ॥५४॥ ललितेति शरद्वर्णनारम्भः ॥५५॥ अब्जेति । लम्बपयोधरा वृद्धा, प्रवृष्टजलतया लघवोऽत एव लम्बमानाः पयोधराः मेघा यस्याः सा ॥ ५६॥ आनन्देति । जीवनानि जलानि जीवनार्थवृत्तीः ।

काले स तस्मिन् सुदृशा समेतः
शच्येव शक्रो विजहार कामम् ।
नियुज्य कार्येष्वखिलेष्वमात्यान्
अत्यन्तमर्थागमजागरूकान् ॥ ५९ ॥

तिस्रः कन्या यस्य प्रभुतानियतार्थसाधकन्यायस्य ।
आसन्नलकान्ताभाः कोमलगात्र्यस्ततस्तु नलकान्ताभाः ॥ ६० ॥

ततस्तु तिरुवेङ्कटात् स्फुरदमोघशक्तेर्बुधान्
सदाऽवत उपायतः खलजनान् निराकुर्वतः ।
प्रसादत उमापतेर्ललितमूर्तितः कामतः
बभूव तनयोऽधिकः सुरपतेर्जयन्तो यथा ॥ ६१ ॥

---

संस्कर्तुष्टीका

जडाशयेन अल्पमेधसा, डलयोः अभेदाद् जलाशयेन मेघेन ॥ ५७ ॥ ५८ ॥ रममाणविशेषेण रममाणो विट् आनन्दरङ्गरूपो वैश्यः यस्मिन् तेन रममाणविशा । इषेण आश्वयुङ्मासेन । विकास आकाश इति कोशस्थटिप्पणी । तत्रोज्ज्वलचन्द्र एव हासः तद्वती ॥५८॥५९॥ तिस्र इति । पूर्वमेका कन्या, ततस्तिस्रः, आहत्य रङ्गनेतुश्चतस्रः कन्या आसन् । प्रथमजातायाः 'पाप्पाल्' इति नाम, सा स्वविवाहोत्सवमध्य एव मृता । अन्यासु तिसृषु द्वयोर्नामनी 'पोन्नाची' 'नन्नाची' इति । एकस्या नाम न ज्ञायते । ततस्तु नलकान्ताभाः दमयन्तीसदृश्यः कोमलगात्र्यः अलकान्ताभाः चिकुरशोभावत्यः तिस्रः कन्या प्रभुतानियतार्थसाधकन्यायस्य स्वप्रभुतया नियतोऽर्थसाधको न्यायः नीतिमार्गः यस्य तस्य रङ्गप्रभोः आसन्निति अन्वयः ॥ ६० ॥ ततस्त्विति । बुधान् सदा अवतः रक्षतः । ललितमूर्तितः तत्कारणात् कामतः कामदेव इव भासमानात् ॥ ६१ ॥ अजनीति । कमला लक्ष्मीः ।

अजनि च तनुजितकमला दुहिता काचिन्निजाक्ष्यतनुजितकमला ।
साध्वीरीत्या ख्याता मनुजैर्या त्रिपुरसुन्दरीत्याख्याता ॥ ६२ ॥

ततस्तु जननीं मुहुर्जनकमात्मनो लीलया
नयन्मुदमुदारधीः [1]विधुरिवात्तपोषः शनैः ।
कलाभिरुदितोऽखिलैः सततलालितो मानवै-
र्मनोजवसतामधात्[2] स खलु नामतः कृत्यतः ॥ ६३ ॥

अथैवमनुपमनिरवधिकविषयसुखानुभवैकतानो बलानुज इव अनवरतं स्वाश्रितगोप[3]बहुलार्थसाधनकृतोद्यमो निलिम्पसाल इव सदानन्दनोन्मुखः कृतमुखो विचित्रविविधवसनभूषणकुसुम[4]चन्दनकुंकुममृगमदघनसारवीटीसेवनप्रसितयाऽनारतमुमयेव शिवानुकूलया सन्ततमुदितान्तरङ्गया तया मङ्गया सहचर्या[5] समेतः श्रियेव विष्टरश्रवा विहरन् अवाप्तसमस्तकामोऽपि अलब्धमुख्यतनयाभ्युदयतया नातिहृष्टमनाः रात्रिंदिवमभीप्सितार्थपारदर्शनायावनिदेवताराधनैः व्रतोपवासैश्च वन्दारुजनमन्दारश्रीजानकीरमणप्रसादमभिकाङ्क्षमाणः कञ्चन समयमतिवाहयाञ्चक्रे ॥

---

1. M. wrongly मधुः 2. P. अयात् । 3. M. बलार्थं.
4. P. omits कुसुम 5. P. सहचर्यया

---

संस्कृतटीका

निजाक्ष्यतनुजितकमला निजाक्ष्णा अतनु निकामं जितं कमलं यया सा । साध्वीरीत्या ख्याता प्रख्याता । त्रिपुरसुन्दरीत्याख्याता । अस्यास्त्रिपुरसुन्दर्या वात्सल्यनाम 'कुळन्दै' इति ॥६२॥ मनोजवसतां स्वपितृतुल्यतां नामतः कृत्यतश्च अधात् । रङ्गनेतुर्भ्रातुस्तिरुवेङ्कटस्य पुत्रस्याप्यस्य तिरुवेङ्कट इत्येव नाम । वात्सल्यनाम चास्य 'अप्पावु' इति ॥ ६३ ॥

चैत्रेऽ*भिजानति गुरौ प्रयतौ नियुक्तौ
जायापती गुरुजनैरखिलार्थसिद्ध्यै ।
आराधनं रघुपतेः कुरुतः स्म भक्त्या
वीराभि[1]लाषपरिपूर्तिधृतान्तरङ्गौ ॥ ६४ ॥

अथ पुरि गुरुमतिधाम स्वगिरा योऽत्येति देवगुरुमतिधामा ।
स कलावान् द्विजराजः कश्चिदिवासीत् सुशीलवान् द्विजराजः ॥
तस्यां रजन्यां द्विजरूपधारी स्वप्ने महानीलनिभप्रतीकः ।
राजाभिधानं रघुराट् सवर्णी[2] रामस्समागत्य तमित्थमाह ॥ ६६ ॥

1. Gap here in M. 2. M. wrongly सवर्णिनम् ।

को. टि.

* P. अभिजानति शुक्लपञ्चमीदिने । (गुरौ) गुरुवासरे ।

संस्कर्तुष्टीका

बलानुजः कृष्णः। स्वाश्रिता गोपाः बहुला गावः, तेषामर्थसाधने कृतोद्यमः । प्रकृते स्वाश्रितानां गोपो रक्षकः, बहुलार्थानां प्रभूतधनाना साधने कृतोद्यमश्च । निलिम्पसालः स्वर्द्रुमः । नन्दनं देववनम् । प्रकृते सतामानन्दने उन्मुखः । कृतमुखो निपुणः । प्रसितया तत्परया ॥ शिवानुकूलया मङ्गलानुकूलया परमेश्वरानुकूलया च । विष्टरश्रवाः विष्णुः ॥ चैत्रेति । वीराभिलाषेति वीरः पुत्रः । 'वीरो वा शर्वशक्रयोः, पुत्रे शूरे च स त्रिषु ।' इति केशवस्वामी ॥ ६४ ॥ अथेति । पुरि नूतनपत्तने । गुरुमतिधाम गुर्व्या मतेः धाम आश्रयः । स्वगिरा वाक्पाटवेन यो देवगुरुं बृहस्पतिमत्येति । अतिधामा महातेजाः । कलावान् पूर्णषोडशकलः चतुष्षष्टि-कलापूर्णश्च । द्विजराज इव चन्द्र इव द्विजराजः ब्राह्मणश्रेष्ठः राजाभिधानः ॥ ६५॥ तस्यामिति । तस्यां रजन्यां चैत्रशुक्लपञ्चमीरजन्याम् । महानीलनिभ-

अयि बुधेन्द्र समर्पय सत्वरं विजयरङ्गनृपाय शुभाक्षतान् ।
अभिमतार्थकरानभिमन्त्रितान् सदनमेत्य तदीयमिमानिति ॥ ६७ ॥

इतिवचनमुदीर्य श्रीपतिर्वर्णिनामा*
द्विजशयमथ नीत्वा शोभना मन्त्रशेषाः ।
ललितपृथुलचञ्चद्वालधीतेन तेन
श्रितजनसुरसालस्तत्र सोऽन्तर्हितोऽभूत् ॥ ६८ ॥

ततः प्रबुद्धः स तु राजनामा काल्ये द्विजः स्वप्नमतिप्रहृष्टः ।
न्यवेदयत् प्राप्य तदोपकार्यामानन्दरङ्गाय वधूसखाय ॥ ६९ ॥

द्विजादुपश्रुत्य स जातसंमदः प्रसादमुच्चैर्जनकात्मजापतेः ।
प्रजाधिपस्तं निधिनाथसन्निभः प्रपूजयामास च वाग्भिरर्थतः॥७०॥

को. टि.

* M. वर्णिनामेत्यत्र वर्णिना अमा इति (P. पद)विभागः ।

संस्कर्तुष्टीका

प्रतीकः महानीलरत्नकान्तिमच्छरीरो रघुराट् रामः सवर्णी वर्णिना ब्रह्मचारिणा हनुमता सह वर्तत इति सवर्णी । तं राजाभिधानं द्विजराजमित्थमाह ॥६६॥ ६७॥ इतिवचनं मन्त्राक्षतानिमान् आनन्दरङ्गभवनमेत्य तस्मै देहीत्येवंरूपम् । वर्णिना हनुमता अमा साकम् । द्विजशयं द्विजस्य भुजम् । शोभना मन्त्रशेषाः शोभना हरिद्रायुक्ताः मन्त्रशेषा मन्त्राक्षताः । शेषाः अक्षताः । 'माल्याक्षतादिदाने तु स्त्री शेषा' इति केशवस्वामी । वालधीतेन वालधिम् इतेन प्राप्तेन हनूमता । सः रामः ॥ ६८ ॥ तत इति । काल्ये प्रभाते । उपकार्या प्रभुसद्म ॥ ६९ ॥ द्विजादिति । तं राजनामानं द्विजम् । निधिनाथसन्निभः कुबेरतुल्यः । वाग्भिः प्रशंसावाग्भिः अर्थतः धनैश्च ॥ ७० ॥

तस्यां ततश्चैत्रसुदर्शनाया* मानन्दरङ्गक्षितिभृत्पुरन्ध्री ।
सा नन्दगोपान्वयवृद्धिहेतुमानन्दिताशेषमधत्त गर्भम् ॥ ७१ ॥

इति श्रीवत्सकुलतिलकायमान[1]गङ्गाधराध्वरिसुधाब्धिसुधाकरेण
पार्वतीगर्भसम्भवेन श्रीनिवासकविना विरचिते
श्रीमदानन्दरङ्गविजये चम्पूकाव्ये
पञ्चमस्तबकः

॥ अथ षष्ठस्तबकः ॥

विजयरङ्गमनोऽब्धिविवृद्धये
महितशेषसुतेन्द्रदिशोदरात् ।
सुजनदृक्कुमुदप्रियकृत्सुधा-*
निधिरथाविरभूत् सुतचन्द्रमाः ॥ १ ॥

---

1. P. तिलक

---

को. टि.

* M. चैत्रसुदर्शनायां चैत्रकृष्णपञ्चमीरात्रौ। P. सुदर्शना चैत्रशुक्लपञ्चमीरात्रिः।
* P. धा बुद्धिः ।

---

संस्कर्तुष्टीका

अत्र षष्ठस्तबके नेतुः पुत्रजन्म, परस्परं बद्धवैराणा यवनानामन्यतमाभ्यां हीरचन्द्राभिधाभ्याम् आनन्दरङ्गनेतुः प्रांशुहूणपतेश्च साहाय्याय प्रार्थना, आमूरुस्थले युद्धे आर्काटिकापतेः अनवार्धिनामकस्य यवनस्य मरणम्, विजयिनोः हीरचन्द्राभिधयोः यवननायकयोः नूतननगरप्राप्तिः नेत्रा आनन्दरङ्गेण प्रांशुहूणपतिना च समागमश्च वस्तु ।

प्रसेदुराशाः पवनाः सुखा ववुः
प्रजज्वलुश्च ज्वलनाः प्रदक्षिणम् ।
शुभप्रचारा मिहिरादयो ग्रहा
बभूवुरस्मिंस्तनये समुद्यति [कटकोदिते सुते][1]* ॥२॥

अनिमिषे शशभृद् गुरुभार्गवौ मकरगौ तमसा कलशे[2] कुजः ।
धनुषि सौम्यरवी रविनन्दनो वणिजि केतुरभूच्च विलग्नगः ॥ ३ ॥

प्रभवो गुणरत्नानां [3]प्रभवो व तनूभवः ।
प्रभवे रङ्गभूपाख्यप्रभवे हितमाचरन्* ॥ ४ ॥

---

1. M. gives this as a variant.
2. Gap here in M.
3 P. प्रभवोऽभूत्

---

को. टि.

M. वंशस्थं वृत्तम् । * M. प्रभश्चसौ वश्च प्रभवो मन्मथः ।

---

संस्कर्तुष्टीका

विजयेति । शेषसुता मङ्गाभिधा आनन्दरङ्गपत्नी, सैव इन्द्रादिशा प्राची दिक् । सुजनानां दक्कुमुदानां प्रियकृत् । सुधानिधिः शोभना धा बुद्धिः, तस्या निधिः, अमृतनिधिश्च ॥ १ ॥ २ ॥

अनिमिषे मीने । तत्र चन्द्रः । गुरुभार्गवौ देवासुरगुरू तमसा राहुणा सह मकरे । कलशे कुंभे कुजः । धनुषि सौम्यरवी बुधसूर्यौ । रविनन्दनः शनैश्चरः वाणिजि तुलायाम् । केतुश्च लग्ने । इति जातकस्य जन्मकाले ग्रहस्थितिः ॥ ३ ॥ गुणरत्नानां प्रभवः जन्मभूमिः । प्रभवो व मन्मथ इव भासमानः । तनूभवः पुत्रः । प्रभवे प्रभवनाम्नि संवत्सरे अभूदिति शेषः । 'प्रभवोऽभूत्तनूभवः' इति पाठे प्रभवः प्रकर्षेण वर्तमानः ॥ ४ ॥ दिक्शातोदरी दिगङ्गना । महत्तराः प्रधानाः ।

अथ पुनश्चिरकालकाङ्क्षितकुमारजननकुमुदबान्धवोदयसमनन्तरक्षणोन्मिषितहृदयकुवलयेन परमखण्डमहीमण्डलसाम्राज्यलाभमिव तनयलाभमवगच्छता दिक्शातोदरीकुचतटगुच्छायमानस्वच्छतरनिजयशसा तत्तादृशसुतजननमहोत्सवादिदृक्षुसमागतमहत्तरपौरजनव्यूहसंभाव्यमानेन बहुतरावितीर्णभूरिरजतमहाम्बरनिकुरुम्बौज्ज्वल्यशालिभूरिशालिराशिप्रीणितसर्ववर्णेन सर्वतोऽपि लब्धवर्णेन सानन्दमानन्दरङ्गमहीपतिना सत्वरमाहूतः [1]पुरुहूताचार्य इव बहुलसत्प्रज्ञः दैवज्ञशिखामणिः न्यासग्रामवासी सुब्रह्मण्यनामा सत्कृतः सावधानमभिलक्ष्य कुमारजननवेलाम् अभिवीक्ष्य तात्कालिकनवग्रहचर्याम्, आश्चर्य[2]कररत्नहर्यक्षासनम् आस्थितस्य वलक्षमृदुलप्रावारस्य परम् अदभ्रविभ्राजमानमौक्तिकदामदीव्यद्वक्षसः समुल्लसन्माणिक्यखचित[3]कटिसूत्रप्रोद्भासितकटितटस्य, हाटकवलया

1. 2. M. corrupt here. 3. P. कटिसूत्रस्य घटितहाटकवलयाञ्चित

संस्कर्तुष्टीका

भूरिशालीति । प्रभूतं शालिधान्यदानप्रीणितसर्ववर्णजनेन । लब्धवर्णेन विदुषा । नेतुरानन्दरङ्गस्यैव ज्योतिःशास्त्रे वैदुष्यमभूत् । तथैव गेयनाट्ययोः । एतदेव सर्वत इति पदेन सूचितम् । न्यासग्रामः 'वैप्पूर्' इति ख्यातः । अभिवीक्ष्य तात्कालिकनवग्रहचर्यामिति जातकस्य जननकाले ग्रहाणां स्वरूपस्थानावस्थादिवर्णनम् । आश्चर्येति कटके लग्ने केतोर्वर्णनम् । हर्यक्षासनं सिंहासनम् । तच्च केतोः क्वचिच्छ्रूयते । वलक्षो धवलः । सङ्गरनिर्जितेति । केतोर्गुरुशुक्रदृष्टेः कीर्त्यादिसंभवादेवमुक्तिः । उदग्रदृशः क्रूरदृशः । अभ्युदयः, सामान्यत उदयः, मोक्षश्च, केतोस्तत्कारकत्वात् ।

श्रितप्रशासनदण्डमण्डितकरपङ्कजस्य अरुणचण्डकिरणनिचयस-
ध्रीचीनमणिगणोज्ज्वलकिरीटविराजमाननिजोत्तमाङ्गस्य सङ्गरनि-
र्जितसर्वप्रत्यर्थिसार्थतया निस्सपत्ननिश्शेषविश्वंभरेश्वरभावाहङ्कृति-
मेदुरितस्वान्ततोपजनितनिर्वेलमहोत्साहसुमुखस्य उदङ्मुखस्य
उदग्रदृशः कलितविलग्नस्थितेरभ्यर्हिताभ्युदयहेतोः केतोर्दक्षिण-
पार्श्वस्थितवीटीप्रदानपरोपजीविजनप्रसरदीषद्रोषव्यञ्जकारुणिमा-
श्रितविलोचनाञ्चलताम् आलोचयन्, चामीकररेखाञ्चितमेचकसुचेल
ककनद्विलग्नकस्य मकुटिनः कवाटपरिणाहिवत्सपरिस्फुरद्भूरि-
दाम्नः समाधिगतसुखधाम्नो विरचितनमुचिशासनदिशाभिमुख्यस्य

---

संस्कर्तुष्टीका

चामीकरेति लग्नाच्चतुर्थे तुलायां सुखधाम्नि स्थितस्य सहस्रकिरणसूनोः शनैश्चरस्य वर्णनम् । मेचकसुचेलेति, तस्य नीलम्बरत्वं प्रसिद्धम्, विलग्नकं कटिः । वत्सं वक्षः । 'वत्सः पुत्रादि......नोरसि क्लीबम्' इति मेदिनी । नमुचिशासनदिशा प्राची । पुरःप्रदेश इति, तस्य पङ्गुत्वादेव-मुक्तिः । पट्टाभिषेक इति केतोर्दशमदृष्टिसद्भावादुक्तम् । विवस्वतश्चेति षष्ठे धनुषि सूर्यस्य वर्णनम् । अरिसंस्थितेः षष्ठे शत्रुस्थाने स्थितस्य । वारुणीति सूर्यास्तमयानन्तरं जननादेवमुक्तम् । प्रच्छायेति तत्रैव चान्द्रेर्बुधस्य वर्णनम् । हारिद्रं पीतम् अन्तरीयमुत्तरीयम् यस्य सः, पीतांबरत्वं बुधस्य श्रुतम् । कृत्तिशिरस्त्रस्य, बुधस्य चर्मकारकत्वात् । रोपको बाणः । कलम्बासनं धनुः । तद्धरत्वं बुधस्य क्वचित्प्रोक्तम् । समीरणादिशेति षष्ठे पराक्रमस्थानाधिपत्या-देवमुक्तम् । उत्पत्स्येति बुधस्य कन्यायामुच्चभावादत्र धनुषि अवतरणशीलत्वा-दित्थमुक्तम् । भास्करिककुभं शनैश्चरदिशम् । सदयमिति शतमखदेशिकस्य गुरोर्मकरगस्य वर्णनम् । प्रदाय साम्राज्यमिति, केतोर्गुरुदृष्टिसत्त्वात् ।

तिष्ठतः पुरःप्रदेशविनिहितसव्येतरचरणस्य सहस्रकिरणसूनो-स्तात्कालिककेतुपट्टाभिषेकक्रियाव्यग्रतां विभावयन्, विवस्वतश्च कार्तस्वरवसनस्य विरचितारिसंस्थितेर्हारिणः किरीटिनः प्रजवमधिरुह्य घोटकप्रवेकमाकलितमणिघण्टिकाझणझणाराव-मुखरं वारुणीविलासगमनावसरमवगच्छन्, प्रच्छायहारिद्रान्त[1]-रीयस्य सितायसशृङ्खलादा(स्रः[2]) कृत्तिशिरस्रस्य विलसदुपवीतिनः समारोपितरोपककलम्बासनपाणेः समीरणदिशा प्रस्थाय विजित्य सर्वामपि सहसोर्वीमधिगत्य काष्ठामाग्नेयीमुत्पत्य च विहायसमुन्नत-दृष्टेरवलोक्य भास्करि[3]ककुभं दिधक्षोरिव त्रिलोकीं[4] चान्द्रे(ः)[5] तदनींतनाग्रहकलना[6]माकलयन्, [7]सदयं प्रदाय साम्राज्यं प्राज्याभ्युदयहेतवे केतवे [8]परमनुकलमेतत् परिपालनाय मन्त्रकृतः [9]पवित्रगात्रस्य कलत्रानुगतस्य गोत्रामरोत्तमस्य कल्पित-शिरोवेष्टनस्य विकर्तननन्दनदिङ्मुखस्य शतमखदेशिकस्य सुखमासीनस्य पुण्यजनककुबन्तरविलोकनसमयमवलोकयन्, अतिललितविततदक्षिणप्रघण[10]सदनान्तरनिवेशितरत्नपर्यङ्कविलस-त्कमनीयोपधानकलितसव्यभुजाञ्चितशुचिमृदुलोष्णीषभूषितशीर्षस्य योषिदुपेतस्य गोशीर्षकद्रवोपदेहभासुरदेहस्य दिव्यदामो-चितावदातवारवाणस्य निरवधिकसम्पद्धिकसन्मनसः परमुशनसःस्व-

---

1. M. corrupt here.
2. M. P. दाम-
3. M. भास्करी
4. M. corrupt here.
5. M. चान्द्रे P. ऋक्षाधिपसूनोः
6. M. कलानु P. कलानाम्
7. M. सुदयम्
8. M. चामरजालम्
9. P. पावित्रानिभगात्रस्य
10. M. प्रवण

परिपन्थिजननिरसनालोचनप्रस्तावमस्ताशङ्कमुदस्तैकभ्रु विचारयन्, परुषतरलपनस्य भृशमारक्तनेत्रस्य ग्रसत इव सकलश्रेयांसि रोषावेशैराशिरःकटि पुरुषरूपतामापन्नस्य तदधस्ताच्च अधिगतगूढ-चरणाकृतेर्महाबलहरिरिति विन्यस्य निजमस्तकं प्रसार्य च पुच्छं दिशि वैश्वानर्यां पश्यतश्च क्रूरदृशा निर्दग्धुमिव केतुं निखिलखेटो-द्वेगजनकाहङ्कारदूषितान्तरस्य दैववशात् द्विधाकृतमध्यस्य बहुतेर्माङ्कितप्रतीकस्य स्वर्भानोरुच्छ्वसितुमपि अनवकाशतया निश्चेष्टावस्थां निश्चिन्वन्, निजरूपानुरूपशाटीकस्य विशङ्कट-धात्रीफलप्रस्फुरन्मौक्तिकप्रत्युप्तकोटीरमूर्ध्नः[1] परमनवमस्यापि नव-मखेटभृत्यभावजुषः प्राप्तायुषः पृथ्वीजनुष[2]स्तस्मै स्वहस्ताभ्याम् उद्धृतभद्रासनस्पर्शनावसरतामनुचिन्तयन्, कर्बुरा[3]म्बरकदम्ब-विद्रुमस्तम्भद्रुतभर्ममयकुम्भप्रोद्यत्प्रभापटलविविधपटहादिवाद्यघोष-मुखरितमण्डपान्तरसुखविरचितासनस्य [4]एकतः प्रकृष्टतरनटन्न-गाननैपुण्यपारीणस्ववेशनितम्बिनीनिकुरुम्बसंभावितस्य अन्यतश्च गणनविद्याविशारदमहत्तरपुरुषोक्तिप्रत्युक्तिकाम् आरचयतः प्रशासतश्च दुष्टान् राजदण्डेन परतश्च परिपालयतः शिष्टान् पार्श्वयोश्च कलितरजतमहारजतराशेः पुरतश्च विनिहितभूरिनीकाश-भूरिशालिनिचयस्य विलग्नगतग्रहप्रथमेतरप्रक्रियाशालितया तामेव कलयतश्च जातकावरजे प्राचेतसीमाशां निशामयतः पृथुलमृदु-लोपधानविनिहितचरमभागस्य सुभगझषाकलितास्थितेः तुषार-

---

1. M. मूर्तेः 2. पृथ्वीजनुषः missing in M.
3. M. corrupt here. 4. M. omits एकतः

दीधितेर्निजशयनिवेशित[1]नवनवरत्नोप(दा)धाम्नः[2] प्रणिधानावसरतामवधारयन् आदर्श इव, विमृशंश्च मुहुर्मुहुरन्तः, उपशृण्वत्सु सभास्तारेषु प्रहृष्टतरः[3] प्रकृष्टामिष्टनमां गिरमित्थं व्याजहार ॥

1. M. निवेशि 2. M. P. रक्तोपधाम्नः 3. P. प्रहृष्टमनाः

संस्कर्तुष्टीका

कलत्रानुगतस्य सप्तमस्थस्य । पवित्रगात्रस्येति भाग्याधिपतेरस्य मौढ्याभावस्सूचितः । विकर्तननन्दनादिङ्मुखस्य शनैश्चरगृहे स्थितस्य । पुण्यजनेति निर्ऋत्यां केतुं पश्यत । अतिललितेति तत्रैव शुक्रस्य वर्णनम् । प्रघणोऽलिन्दः । गोशीर्षं हरिचन्दनम् । उपदेहः उपलेपः । परुषतरेति तत्रैव स्वर्भानो राहोर्वर्णनम् । गूढचरणस्सर्पः । महाबलहरिति वायुदिशि । वैश्वानर्याम् आग्नेय्याम् । खेटः ग्रहः । ईर्मं व्रणः । उच्छ्वसितुमपीति राहोर्गुरुशुक्रसंबन्धात् दुरत्वापहारात् । निर्दग्धुमिव केतुमिति केतो राहुदृष्टत्वात् । निजरूपेति कुंभस्थस्य पृथ्वीजनुषोऽङ्गारकस्य वर्णनम् । निजरूपानुरूपशाटीकस्य रक्तरूपांबरधरस्य । विशङ्कटं बृहत् । धात्रीफलमामलकम् । नवमखेटभृत्यभावजुष इति अङ्गारकस्य नवमखेटः शनैश्चरः, ततः पञ्चमे भृत्यभावे स्थितत्वादेवमुक्तम् । अत एव शनैश्चराय उद्धृतभद्रासनेत्याद्युक्तम् । प्राप्तायुष इति, आयुस्स्थानेऽष्टमे वर्तमानत्वादेवमुक्तिः । कर्बुरेति मीनगस्य तुषारदीधितेश्चन्द्रस्य वर्णनम् । तस्य लग्नाधिपतित्वात्, नवमे भाग्यभावस्थितत्वात् सुखसंपदादिकारकत्वादेवं वर्णनम् । गणनविद्येति पाण्डित्यं सूचितम् । राजत्वात् प्रशासत इत्याद्युक्तम् । संपत्करत्वात् रजतशाल्याद्युक्तिः । मीनगस्येन्दोः फलमेवं श्रूयते हि 'जलपरधनभोक्ता दारवासोऽनुरक्तः * * * । अभिभवति सपत्नान् स्त्रीजितश्चारुदृष्टिः द्युतिनिधिधनभोगी पण्डितश्चान्त्यराशौ ।" विलग्नगतेति । लग्नस्थकेतोः प्रथमेतरप्रक्रिया द्वितीयतृतीयभवादिसहोदरभावः तृतीयायाः कन्याराशेः, ततस्सप्तमवर्तित्वाच्चन्द्रस्य तथोक्तम् । अवरजः सहोदरः ।

रघूत्तम इवोज्ज्वलः कटकलग्नजातः सुधी-
स्तदीयसुकृपामरद्रुमविशालशाखाफलम् ।
नमन्निखिलभूपतिप्रवरमौलिराजन्निज-
प्रशासनसुमः सुतस्तव भवेत् सदानन्दनः* ॥ ५ ॥

किञ्च—

सूर्यादिग्रहभद्रदिष्टजननाद्बाल्ये परं ख्यातिमान्
निर्जित्यारिकुलं बली तरुणिमाश्लिष्टप्रहृष्टाशयः ।
न्यायादाहिमशैलसेतु धृतिमान् राज्यं प्रशासद्बहून्
भुञ्जानो विषयांस्त्रिसप्ततिसमा भूमावसौ स्थास्यति ॥

वित्तस्त्वत्तश्चित्तजस्पर्धिरूपश्चित्ताभोगी सत्तमेषु द्विजेषु ।
वित्तेशश्रीरेष तत्तादृगुद्य[1]च्चित्तोल्लासी* कीर्तिमांस्त्वत्तनूजः* ॥ ७ ॥

1. M. तादृश gap चित्तोलासी

को. टि.

* P. सुतो राजा । सदानन्दनः सत्पुरुषानन्दकत्वे सुतपदं पुत्रपरम् ।
* P. चित्तोल्लासी बुद्धिदयोल्लासी (M. adds) इति तात्पर्यम् ।

संस्कर्तुष्टीका

प्रणिधानावसरतां, नवमस्य तपःस्थानत्वात् ॥ रघूत्तमेति । कटकलग्नत्वात्त-थोक्तिः । तदीयेति । रामचन्द्रकृपाकल्पवृक्षफलभूतः । निजप्रशासनसुमः तादृशस्वाज्ञारूपकुसुमः । सुतः पुत्रः नृपश्चेति श्लेषः । 'सुतः पुत्रे नृपे' इति हेमचन्द्रः ॥ ५ ॥ सूर्येति । सूर्यादिग्रहैः भद्रदिष्टस्य शुभभाग्यस्य जननात् । तरुणिमेति सप्तमे गुरुशुक्रस्थितेः । न्यायादित्यादि नीचभङ्गराजयोगात् । त्रिसप्ततिसमाः गुरुशुक्रयोः केन्द्रस्थत्वात्, आयुष्कारकस्य शनैश्चरस्य उच्चराशि-

इत्थमभ्यर्हितं कुमाराभ्युदयमभिदधानं ज्यौतिषिकप्रधानं सुब्रह्मण्यनामानं ब्रह्मण्यशिरोमणिः तिरुवेङ्कटनृपालकुलकमलाकरकमलोल्लासद्युमणिर्द्विजजनचिन्तामणिर्मणिहारहीर[1]कर्णिकाकनककटककटिसूत्रनवरत्नखचितोर्मिकादिभि[2]र्भूषणैः कञ्चुकोष्णीषसारसनानाहतराङ्कवप्रावृतक्षौममुख्यैर्वसनैरसंख्येयैः दीनारैर्दूरीकृतदैन्यार्त्या वृत्त्या च सम्यक् संभावयामास ॥

1. M. corrupt here. 2. P. corrupt here.

संस्कर्तुष्टीका

स्थत्वाच्च ॥६॥ त्वत्तोऽपि वित्तः प्रख्यातः । चित्तजो मन्मथः । चित्ताभोगी मनस्कारवान् । सर्वथा सत्तमाद्विजप्रवणाचित्तः । चित्तोल्लासी चित् बुद्धिः, ता दया, ताभ्यामुल्लासी ॥७॥ ब्रह्मण्यशिरोमणिः ब्राह्मणानुकूलेषु प्रधानः । द्युमणिः सूर्यः । सारसनं कञ्चुकदार्ढ्यार्थं मध्येकायं निबध्यमानम् । अनाहतम् नूतनम् । राङ्कवं मृगरोमजम् । प्रावृतं प्रावरणार्थवस्त्रम् । दूरीकृता दैन्यस्यार्तिः यया सा । तादृश्या वृत्त्या जीवनोपायभूतधनादिदानेन, अथवा स्ववृत्त्या स्वभावेन ॥ वर्णा इति । वर्णाः चतुर्वर्णात्मको लोकः । स्वर्णं किरतीति, तेन, आनन्दरङ्गेण । वितीर्णवसुधाः दत्तभूदानाः । कर्णाटनीवृत्स्थिताः कर्णाटदेशस्थिताः वर्णा इत्यन्वयः । कर्णाट इति आर्काटिकासीम्नो नाम । ऊर्णादिपूर्णानकैः । पूर्णानकं नाम उत्सवेषु मुदा प्रसह्य ह्रियमाणं वस्त्राभरणादिकम् । तैः सकलास्तु तूर्णं त्वरितं पूर्णमनोरथा बभूवुः । 'तूर्णादिपूर्णानकैः' इत्यत्र 'तु-ऊर्णादि' इति पदच्छेदः । अर्णोजस्सूर्यः तत्सुहृत् बुद्धः । 'गौतमश्चार्कबन्धुश्च' इत्यमरः । बुद्धदधीचिशिबिकर्णा दाने प्रसिद्धाः । जार्णः जीर्णीकृतः तेषां वर्णः यशोगुणकथा येन सः, तादृश आत्मा यस्य सः तेन । श्रीपर्णाननः

वर्णाः स्वर्णकिरा वितीर्णवसुधाः कर्णाटनीवृत्स्थिताः
तूर्णं पूर्णमनोरथाश्च सकलास्तूर्यादिपूर्णानकैः ।
जीर्णार्णोजसुहृद्धीचिशिबिराद्कर्णादिवर्णात्मना
[1]श्रीपर्णाननरङ्गभूमिपतिनावर्ण्ये बभूवुर्महे ॥ ८ ॥

सहसि जातममुं सह सीतया रघुपतिः कृपया सुतमात्मनः ।
सुमहसा सहितं हृदि भावयन् शिशुमपालयदीड्यगुणालयम् ॥९॥

अनन्तरमसौ बालो बालेन्दुरिव प्रियदर्शनो दिने दिने प्रवर्धमानः स्वालोकविकसितलोचनकैरवयोः प्रसूजनित्रोः[2]

1. M. श्रीवर्ण - P जनयित्रोः

संस्कर्तुष्टीका

कमलमुखः । 'श्रीपर्णं कमलेऽपि च' इत्यमरः । तादृशरङ्गभूमिपतिना वितीर्णवसुधाः पूर्णमनोरथाश्च सकला बभूवुरित्यन्वयः । अवर्ण्ये तस्मिन् महे पुत्रजन्मोत्सवे ॥ ८ ॥ सहसि हेमन्तर्तौ । सुमहसा सुबलेन सहितम् ॥ ९ ॥ वसुमतीवृन्दारकैः ब्राह्मणैः । अभिरूपाकृतिः मनोज्ञाकृतिः । सदाशिवस्य शंभोः मनोविकासकरः इति सुब्रह्मण्यपक्ष । सदाशिवानां सदाशिवमनसां वा सदा मङ्गलानुध्यायिनामिष्टानां मनोविकासकरः इत्युपमेयबालपक्षे । अच्युतो विष्णुः । श्रीः लक्ष्मीः तयोः जनित्रोः मनोहरा मूर्तिः यस्येति मन्मथपक्षे । उपमेयपक्षे अनवरतम् न च्युता अच्युता श्रीः शोभा, तया मनोहरा मूर्तिर्यस्य स इति । मित्रोदयः सूर्योदयः सुहृदभ्युदयश्च । आश्रितालिः आश्रितसमूहः आश्रिता एव अलयो भृङ्गा इति च ।

मुहुर्मुहुरधिकां मुदमादधानः कृताभिधानो मुद्दुविजयानन्दरङ्ग इति वसुमतीबृन्दारकैः अभिरूपाकृतिः कुमार इव सदाशिवमनो-विकासकरः, प्रद्युम्न इव अनवरतमच्युतश्रीमनोहरमूर्तिः, वासरारम्भ इव मित्रोदयहेतुः, कुसुमस्तबक इव आश्रितालिजीवननिदानम्, अद्भुतलीलः समस्तानपि जनान् स्वकीयाविर्भावेन सन्ततमवि-नाभूतस्वनामपदाभिधेयानकरोत् ॥

गर्भधारककुलाब्धिसुधांशोरर्भकस्य मधुरैर्मृदुजल्पैः ।
जानुचङ्क्रमणकेलिभिरेतौ जम्पती मुदमावपतुरस्य ॥ १० ॥

ततोऽजनि सुतः श्रीमान् अन्यो रङ्गमहीपतेः ।
यस्य स्मरेन्दुलक्ष्मीशा लज्जन्ते रूपसम्पदा ॥ ११ ॥

श्रीनन्दनागमपरिष्कृतदिव्यधामा
जिष्णुः सुधीर्विजयरङ्गनृपालवर्यः ।
आनन्दयन् सुमनसां गणमुन्नतश्रीः
सानन्दमास्त चिरमित्थमसौ कृतार्थः* ॥ १२ ॥

को. टि.

* P श्रीनन्दनागमेत्यत्र अर्थत्रय द्रष्टव्यम् ।

संस्कर्तुष्टीका

अविनाभूतेति । स्वनामधेयं 'विजयानन्दः', तदभिधेयौ विजयः आनन्दश्च । जनान् विजयानन्दाभ्याममविनाभूतानकरोदित्यर्थः ॥ गर्भधारकेति । जंपती दंपती ॥१०॥११॥ श्रीनन्दनेति । नन्दनागमः पुत्रजन्म । इन्द्रपक्षे नन्दन-वनीया अगमाः वृक्षाः, कल्पशाखिनः । तैः परिष्कृतं दिव्यं धाम यस्य सः । अर्थत्रयं द्रष्टव्यमिति कोशस्थटिप्पण्यां निर्देशः । श्रियः लक्ष्म्याः

सकलासु कलास्वभिज्ञताम् अधिगत्यैव बभौ विनीतिमान् ।
गुरुभिः कविभिः कलाधरैः सहितो नित्यमुदारधीरयम् ॥ १३ ॥

सम्पत्तौ धनदो मृकण्डुतनयो दीर्घायुषि श्रीपतिः
सौजन्ये रविनन्दनो वितरणे प्रह्लादने चन्द्रमाः ।
सौन्दर्ये मदनो यशस्यवनिभूजानी रघूणां पतिः
श्रीमानेष सुधीश्चकास्ति धरणावानन्दरङ्गप्रभुः ॥ १४ ॥

---

संस्कर्तुष्टीका

नन्दनस्य आनन्दस्य आगमः प्राप्तिः इति तृतीयोऽर्थः स्यात् । जिष्णुः जयशीलः इन्द्रश्च । विजयरङ्गनृपालवर्यः आनन्दरङ्गः । सुमनसां बुधानां विबुधानां च ॥ १२ ॥ २३ ॥ संपत्तौ इति । रविनन्दनः कर्णः ॥ १४ ॥

## अथ युद्धसङ्गतिः ।

कर्णाटदेशे परस्परं द्विषतां यवनानां प्रत्येकं प्रांशुभिः आङ्ग्लैश्च सहकृतानां युद्धानि अत्र वर्ण्यन्ते । प्रांशूनां नूतनपुरे मन्त्रित्वात् आनन्दरङ्गस्याप्येषु युद्धेषु प्रांशुसहायापेक्षिणोः चन्द्रहीराभिधयोः यवनयोः साहाय्यसंपादने समुत्साहोऽत्र प्रतिपाद्यते । अद्यत्वे 'निजाम्' राज्यतया ख्याते प्रान्ते डिल्लीयवनसार्वभौमस्य सामन्तः 'आसब्जा' नाम यवनपतिरासीत्, यः 'निजाम्' राजपरम्परायाः कूटस्थ आसीत् । तस्य पुत्रेषु अज्यायान् अन्यतमः 'नासर् जङ्'नामकः आसीत्, सत्येव पितरि येन नासराभिधेन राज्यकांक्षया कलहायितम् । 'बीजपूर्' प्रान्ते दत्ताधिकारश्चासीत् 'आसब्जा'-दौहित्रः 'हिदायत् मोहि उद्दीन्' (मुझभर् जङ्) नामकः, योऽस्यां चम्प्वां 'हीर' इत्यभिधीयते । मृते च 'आसब्जा' नामके नासराभिधेन तदवरपुत्रेण राज्यं स्वीकृतम् । पुरैव वैरमासीद् मातुलभागिनेययोः नासरहीरयोः, यतः हीरपिता 'मुतवसिल् खान्' नामकः स्यालेन नासरेण निहतः । एतस्मिन् समये मराटैः सटाराप्रदेशात् बन्धनान् मुक्तः चन्द्राभिधानः(चण्डा साहिब्)

अथ युद्धसङ्गतिः[1]

आसीदशेषनृपमौलिविराजमान-
कोटीरकोटिकुरुविन्दमणिप्रभाभिः ।
नीराजिताङ्घ्रियुगलस्य स हीरनामा
डिल्लीश्वरस्य सचिवः सुमतिर्हि कश्चित् ॥ १५ ॥

स खलु पुनर्धीरधीः अहार्यसारः सुतरामवार्यनिजभुजबल-सहकृतप्रतापतपनतेजःप्रतिहतविमतावश्यायः* सुभटमुकुटालङ्कार-हीरो हीरनृपालः सकलराजन्यमौलिमाननीयालङ्घनीयशासनेन बल-

1. Subject heading given in P.

को. टि.

* M. अवश्यायो हिमगर्वयोरिति रूपकम् । P. अवश्यायो हिमगर्वौ ।

संस्कर्तुष्टीका

हीरेण सङ्गतः; हीरश्च स्वात्मानं दाक्षिणापथ ( डेक्कान् ) नाथतया डिल्ली-सार्वभौमेन अनुगृहीतमुद्घोषयन् चन्द्रेण सह स्वसैन्यमादाय कर्णाटदेशं प्रति आर्काटिकापतिं 'अनवर्दि खान्' नामकं द्विषन्नाययौ । एवम् आगच्छद्भ्यां हीरचन्द्राभ्यां आनन्दरङ्गद्वारा प्रांशुहूणसाहाय्यं प्रार्थितम् । इयमत्र इतिहासाभिसन्धिः । विस्तरस्तु आंग्लोपोद्घातादवगन्तव्यः । आसीदिति ॥ १५ ॥

सुभटेति । हीरो वज्रः, 'हीडा(रा)यद्-मुहि-उद्दीन्' नामकः आसब्जादौहित्रश्च । डिल्लीसार्वभौमेन 'अहम्मद् षा' नामकेन । अविधेयं स्वपितुर्विरुद्धम्, अत एव अनुपहृतभागधेयं स्वपित्रा अदत्तराज्याधिकारम् । अत्र वृत्तान्तविशेषा आङ्ग्लोपोद्घाते द्रष्टव्याः । आसब्जातनयं नासर्जङ्नामकम् । त्वजननी-सहोदरम् त्वन्मातुलम् । त्वत्पितृहन्तारं 'मुनवरिल् खान्' नामकत्वत्पितृहन्तारम् । आदवन्तीम् 'अदोनि' इति अद्यत्वे प्रसिद्धं प्रदेशम् । १६ ॥

शासनेनेव महानुभावेन डिल्लीसार्वभौमेन सर्वदा बलोत्सेकेन प्रातिभट्यमाचरन्तम् अनुपहृतभागधेयम् अविधेयं वैधेयम् अपगतनयम् आसञ्जातनयं त्वज्जननीसहोदरमपि निस्स्नेहकरुणतया त्वत्पितृहन्तारं मच्छासनावमन्तारं नासरकासरं निरस्य आसेतुनर्मदातटम् अखिलामपि दक्षिणापथप्रक्रियामावहस्वेति नियुक्तः सबहुमानं ससैन्यः प्रस्थितः आदवन्तीं नाम नगरीमवाप ॥

तदनु हीरमहीपतिरुद्धतं रिपुमवेत्य बलीयसमात्मनः ।
मनसि चिन्तयति स्म भृशाकुलो निरसनं कथमस्य भवेदिति ॥ १६॥

प्रतिबद्धमर्थमधिगन्तुमीप्सितं ससहाय एव भवति प्रभुर्जनः ।
तमसि प्रदीपभृत एव पश्यति प्रबलेन दृश्यमपि वस्तु चक्षुषा ॥ १७ ॥

जनः समर्थोऽपि विना सहायं स्वतेजसा नार्हति कर्तुमर्थम् ।
उद्भिद्यते नैव कदापि लोके तुषाद्विमुक्तः खलु तण्डुलौघः ॥ १८ ॥

इत्थं विचार्य मनसा धिषणः स्वबुद्धावर्थाप्तये हितमयं मृगयाञ्चकार ।
प्रत्यर्थिभेदनपटुं सुमतिं सहायं धीरः स हीरनृपतिः सुभटाग्रगण्यः ॥

---

संस्कर्तुष्टीका

प्रतिबद्धमिति । यथाह कालिदासः (मा. अ. मित्रे १.९.) 'अर्थं सप्रातिबन्धं प्रभुरधिगन्तुं सहायवानेव । दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥' इति ॥१७॥ जन इति । उद्भिद्यते इति । 'तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः' इति हितोपदेशे (मित्र. ३५) ॥१८॥ इत्थमिति । स्वबुद्धौ धिषणः बृहस्पतिः ॥१९॥ अत्रान्तर इति । चन्द्रनाम्ना चण्डासाहिब्नामकेन । शेषाह्वयेन । 'शेषराव्' नामकेन चण्डासाहिब्सचिवेन च । एनम् आनन्दरङ्गम् ॥ २०॥ कुवलयं कुमुद, कु-वलयः भूमण्डलम् । कायजः मन्मथः । विकर्तन-

अत्रान्तरे पटुमतिः सह चन्द्रनाम्ना[1]
शेषाह्वयेन सचिवेन स हीरभूपः ।
आगादुदारचरितं शरणं क्रियावान्
स्वाभीप्सितार्थकलनासुरसालमेनम् ॥ २० ॥

यः खलु पुरा पुरारातिप्रसादभाजनतया सकलशिरःश्लाघनीयस्वरूपः स्वरूपालोकहर्षिताखिलकुवलयः कुवलयबान्धव इव अशेषकलाप्रीणितविबुधनिकायः, कायज इव सुकुमारमूर्तिः विकर्तननन्दन इव सर्वदाहितार्थपर[2]मार्गण*दानदक्षः तुण्डीर-

1. M. and P. नामा ।  2. M. परि

को. टि.

* P. मार्गणः प्रहर्तृगणः ।

संस्कर्तुष्टीका

नन्दनः कर्णः । सर्वदाहितार्थेत्यत्र हितेति अहितेति च पदच्छेदः । मार्गणः बाणः याचकश्च । अहिताः शत्रवः । तदर्थपराणां बाणानां दाने प्रयोगे दक्षः । अथवा अहितार्थाः पराः विरोधिनः शत्रवः । तन्मार्गणानां बाणानां दाने खण्डने दक्षः । प्रस्तुते हितार्थपराणां स्वानुकूलार्थेप्सूनां मार्गणानां याचकानां दाने दक्षः । तुण्डीरमण्डलः काञ्चीप्रान्तः । आर्काटिकापतेः 'अलिदोस्त् खान्' नामकस्यैव चण्डासाहिब् जामाता बभूव । त्रिशिरःपल्ल्यां मीनाक्षीनाम्नी राज्ञी बभूव । मैत्रीद्रोहेन तां निगृह्य त्रिशिरःपल्लीं चण्डासाहिब् स्वायत्तीचकार । सुबलदुहिता गान्धारी, तन्नन्दनेन सुयोधनेनेव दुर्योधनेनेव युद्धकुशलेन मानिना च । गुरोरिव बृहस्पतेरिव । वसुधामवतः धन्तेजावतः । वसुधाम् अवतः रक्षतः । वासुदेवकृतयुधिष्ठिरविजययमककाव्यात् (१. ६) उद्धृतेयं पदपंक्तिः ।

मण्डलालंकारभूतायाम् आर्कोटियां नगर्यां सुभटाग्रणीरधिकृतश्चिरमवस्थितो बभूव । येन च उपचितदुःसहबलेन सुबलदुहितृनन्दनेनेव सुयोधनेन मानिना गुरोरिव मनीषिणः शेषाभिधानस्य द्विजवर्यस्य साचिव्येन निराकृतविमतावल्यां त्रिशिरःपल्याम् अलम्भि सिंहासनपदम् । यस्य च निरवधिकवसुधामवतो वसुधामवतो नियतभागधेयासमर्पणकुपितैः वराटलोलुपैः मराटैः आक्रान्तसमस्तसीमैः अधिसमरमापत्य जीवग्राहं गृहीतस्य बलवद्भिः भृशमविनीतैः नीतस्य च तदीयनीवृतमवरोधजनैः महाराजेन शरणागतरक्षणदीक्षितेन महीक्षितां प्रवरेण सदयान्तरङ्गेण विजयानन्दरङ्गेण [1]न्यासभूतः चिरमरक्षि ॥

1. M. corrupt नाव्य

संस्कर्तुष्टीका

नियतभागधेयेति । चन्द्रेण महाराष्ट्रेभ्यो नियतः करो दातव्य आसीत् । तदसमर्पणात् कुपितैः मराटैः महाराष्ट्रैः । वराटलोलुपैः धनगृध्नुभिः । कवेः प्रांशुहूणपक्षीयत्वात् मराटानां च तदननुकूलत्वादेवमुक्तिः । 'रघोजी'मुख्या मराटाः त्रिशिरःपल्लीमाक्रम्य चन्द्राभिधं जगृहुः । तदीयनीवृतं मराटदेशम् । तत्र सटारापुरे तं चन्द्रं बन्धे न्याक्षिपन् । गृहीते चन्द्रे तत्कुटुम्बं नूतनपुरे शरणागतं प्रांशुहूणपतिना आनन्दरङ्गेण च अरक्ष्यत । दातव्यकरापेक्षितधनं च ऋणतया प्रांशुहूणाधिकारिणा मराटेभ्यो दत्त्वा मोचितः चन्द्रः । निरस्तानुशयः त्यक्तचिरकालवैरः । 'अनुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । तदवरोधेति चन्द्रावरोधजनैरित्यर्थः । स्वापतेयं वित्तम् । तदुन्मोचनाय चन्द्रोन्मोचनाय । मराटराजः 'शाहुजी'नामा । आकलिताभिषेणनेन प्रारब्धयुद्धप्रयाणेन

अपि च यं तथागतं भृशमनुशयवान् अवेक्ष्य बहोः कालाद् अनन्यगतिकं सकरुणतया निरस्तानुशयः तदवरोधजन-अर्थिततिरुवेङ्कटनन्दनविश्राणिताधिगताधिकस्वापतेयः सन्दिष्टश्च तदुन्मोचनाय तेन, समर्यादं समाहूय मराटराजः संमान्य सकलैः बहुमानैः, मानधनम् आकलिताभिषेणनेन[1] हीरनृपालेन संभूय साधयस्व स्वकार्यमिति महता सह सैन्येन प्रेषयामास ॥

ततो हीरमहीपालचन्द्रयोः कृतसख्ययोः ।
कार्यार्थिनोरभूत् प्रीती रामसुग्रीवयोरिव ॥ २१ ॥

ऊचे स सत्कृतमिमं विनिवेदितार्थं
प्रीतस्तु हीरनृपतिस्तमुदारवृत्तः ।

---

1 M. आकालिताभीषेण gap. P. आकालिताभिषेण तेन

---

संस्कर्तुष्टीका

'हीरश्च नासरं द्विषन् आत्मानं दक्षिणापथपतिमापिपादयिषति, त्वमपि तेन संभूय तदानुकूल्येन आर्काटिकापतिर्भव' इति मराटपतिना दत्तसैन्यसहायश्चन्द्रः 'चितलदुर्ग्' नामकप्रदेशे हीरेण समगच्छत ॥ २१ ॥ ऊच इति। इमं चन्द्रम् । विनिवेदितार्थम् । विनिवेदितः आर्काटिकात्रिशिरःपल्लीग्रहणरूपोऽर्थः येन सः, तं चन्द्रम् । अथवा हीरेण कर्णाटकप्रान्तग्रहणपूर्वं नासरोन्मूलनरूपः अर्थः विनिवेदितः यस्मै सः, तं, चन्द्रम् । दिष्टबलं दैवबलम् ॥२२॥२३॥ अथवैतमिति । यदि प्रथमं नासरमानिर्जित्य दाक्षिणां दिशं प्रनियावः, तां च ग्रहीतुं यतावहे, दाक्षिणदिशि आर्काटिकापतिः अनवार्द्धिनृपः, 'अन् वार् उद्दीन्' नामकः, बली आस्ते, स च जेतव्यः। तमाविजिज्य च दुस्संपादा नौ दाक्षिणाशा । अतः अनवार्द्धि-जयार्थमुपायाश्चिन्तनीय इति हीरस्य चन्द्रं प्रति मन्त्रालोचनवचनम् ॥ २४ ॥

प्राप्तो भवान् यदधुना सुमतिः सहायः
शङ्के तदुन्मिषति दिष्टबलं मदर्थे ॥ २२ ॥

नासरक्षितिपश्चन्द्र! मातुलो मे महाबलः ।
आस्ते रिपुत्वमालम्ब्य जेष्यामस्तु कथं नु तम् ॥ २३ ॥

अथवैतमनिर्जित्य दिशं दाक्षिण! दक्षिणाम् ।
गतिर्यद्यस्त्यरिस्तत्राप्यनवार्द्धिनृपो बली ॥ २४ ॥

सांयुगीनमनुजस्तुतशौर्यं गर्वितं तमविजित्य बलाढ्यम् ।
सापि नो भवति दक्षिणसीमा नो वशे कथय कञ्चिदुपायम् ॥ २५ ॥

तेनैवमुक्तस्सुमतिः स चन्द्रः प्रत्यूचिवान् प्रत्ययवान्[1] प्रहृष्टः ।
यतोऽर्थलाभोऽरिजयश्च[2] सद्यः स्यातामुपायं मनसा विचिन्त्य ॥ २६ ॥

अस्ति कश्चन सखा महितश्रीनिर्जितेश्वरसखः कृतबुद्धिः ।
तेजसा स दिननाथसदृक्षो गर्वितारिजनदावहुताशः ॥ २७ ॥

यस्य दोर्बलममोघममेयं सन्ततं भृशमभीरवलम्ब्य ।
प्रांशुहूणनृपतिर्नवपुर्यां श्रीपतेरिव हरिस्सुखमास्ते ॥ २८ ॥

---

1. P. प्रश्रयवान् 2. M. an । P. बल

---

संस्कर्तुष्टीका

सांयुगीनाः रणे साधवः ॥ २५ ॥ तेनैवामिति । प्रत्ययवान् ज्ञानवान् ॥ २६ ॥ अस्तीति आनन्दरङ्गवर्णनं प्रस्तौति । महितश्रिया निर्जितेश्वरसखः निर्जितकुबेरः । कृतबुद्धिः विद्वान् ॥ २७ ॥ श्रीपतेरिव उपेन्द्रस्येव । प्रांशुहूणनृपतिः 'डूप्ले' नामकः ॥ २८ ॥ इङ्गिलान् आङ्ग्लेयान् मद्रपत्तनाधिष्ठितान् प्रांशुभिः मुहुः कृतवैरान् ॥ २९ ॥ साहूणपतिना प्रांशुनाथडूप्लेसहितेन ॥ ३० ॥

किञ्च, इङ्गिलानपि तिमिङ्गिलतुल्यांस्तुन्दिलान् सुदृढधीबलजालात् ।
आनिनाय वशमद्भुतशक्तिः प्रांशुहूणनृपतिः किल यस्य ॥ २९ ॥

सम्प्राप्य तेन सरलेन बलाधिकेन
सख्यं सहूणपतिना सुहृदा क्षितीन्द्र ।
आनन्दरङ्गसचिवेन रिपून् निरस्य
स्वाभीप्सितार्थमचिरात् त्वमवाप्नुहीति ॥ ३० ॥

अथैतद् अवकर्ण्य कर्णामृतमुदितमर्णव इव [1]गम्भीरो हीरनामा यवनाधिभूः अत्यारूढमहिमा कृत्यविदामग्रगण्येन मुहुर्मुहुरिष्टफलषाड्गुण्येन तेन सह प्राज्ञेन कुशलमतिर्मतिमतो विनीतान् अभिमतान् वैदग्ध्यमनोहरान् सन्देशहरान् अभिनवपुटभेदनमधिवसते[2] पराक्रमैकवसनेः प्रांशुहूणनृपतेरमात्यमुख्याय विजयानन्दरङ्गाय साम्परायिकसाहाय्यकमपेक्षमाणः स्वहस्तलेखदानपुरःसरवसनभूषणाद्यनेकानर्घवस्तुप्रापणपरान् [3]वदावदान् वशंवदान् प्रेषयन्, ततः प्रस्थाय भूयसा दुस्सहतरसेनया चन्द्रसेनया स्वसैन्येन च चतुरङ्गेण परिवृतः समागच्छन् ततस्ततः समुद्धृतोद्धतकण्टकः स्वायत्तीकृतनानाविधबलदुर्गः[4] अत्वरमामूरुदुर्गमाजगाम ॥

---

1. P. गभीरः
2. P. अधिवसते:
3. P. omits वदावदान् वशंवदान
4. P. दुर्गसीमः

---

संस्कृतटीका

इष्टफलं षाड्गुण्यं सन्धिविग्रहयानासनद्वैधाश्रयरूपाः षड्गुणाः । सन्देशहरान् दूतान् । सांपरायिकं साहाय्यकं युद्धसाह्यम् ।

प्रचोदिता हीरनृपेण दूताः प्रत्यग्रमापुः पुटभेदनं ते ।
अहेडमाना हृदि काङ्क्षमाणा भर्तुः प्रियं शासनमुद्वहन्तः ॥३१॥

अथागत्य दूताः सभायां समन्तात्
सदस्यैः समेतं मुदा सूपविष्टैः ।
पुरस्कृत्य लेखं विनीतास्त्वपश्यं-[1]
स्तदा रङ्गभूपं सदानन्दरूपम् ॥ ३२ ॥

ततस्तु तस्मै विहितप्रणामाः कृतादरा हीरनृपालभृत्याः ।
ददुः सलेखानि महाधनानि रत्नानि राज्ञो वसनानि तानि ॥३३॥

आकर्ण्य दूतमुखतः सुहृदः स वार्ता[2]
चन्द्राह्वयस्य यवनेश्वरसख्यभाजः ।
प्रीतिं परामुपगतः परिपूर्णकामान्[3]
चक्रे मनोज्ञवचसस्तु सभाजनीयान् ॥ ३४ ॥

---

1. M. wrongly ददृशुः 2. P. वार्ते 3. P. कामाः

---

संस्कृतटीका

वदावदान् वाग्मिनः । समुद्धृतेति । कण्टकाः प्रत्यर्थिपृथ्वीपतयः । 'आमूरु', 'आम्बूर्' इति ख्यातः प्रदेशः ॥ प्रचोदिता इति । अहेडमानाः अनादरमकुर्वन्तः ॥३१॥३२॥३३॥ यवनेश्वरेति, हीराभिधस्य सख्यभाजः ॥ ३४ ॥ तथाभूतसुहृदादिति । बन्धनोन्मुक्तप्राप्तसाहाय्यदक्षिणाभिमुखसुहृदः चन्द्रस्य उदन्तश्रवणेन । अशेषनरपतिसमभ्यर्चितेति बाणस्य कादम्बरीगतात् शूद्रकवर्णनादुद्धृता पदपङ्क्तिः । अरिविजयार्थमपेक्षितनिजसाहाय्यस्य । चिरप्रोषितः चिरप्रवासगतः । इता प्राप्ता वार्ता यतः इतवार्तः । तादृशो अविदूरागतः नातिदूरस्थ - आमूरुगतश्च । तस्य निजतातस्य चन्द्रस्य अवलोकनाय उत्कं सरजाभिधानं 'राजा (Rāzā) साहिब्' नामकं चन्द्रपुत्रं

अथ तथाभूतसुहृदागमोदन्तश्रवणेन अशेषनरपतिसमभ्यर्चितशासनस्य पाकशासनस्येव सर्वदा सर्वतः सुतरामप्रतिहतपराक्रमस्य हीरयवनेश्वरस्य विजिगीषोः अरिविजयापेक्षितनिजसाहाय्यस्य प्रार्थनया च द्विगुणीकृतानन्दभरितनिजान्तरङ्गो विजयानन्दरङ्गः तत्प्रहितवाचिकं निशमयन् स्वानिवेदितहीरमहीपतिसन्देशेन प्रस्तुतकार्यानुकूलेन प्रांशुहूणनृपालेन साकं संमन्त्र्य चिरप्रोषितेतवार्ताविदूरागतनिजतातावलोकनोत्कं हर्षितमनस्कं महौजाः सरजाभिधानं शौर्यैकनिधानं सबहुमानमाहूय चान्द्रिमतन्द्रिमाहितवैरस्य पूर्वमेवानवर्धिदस्योः तस्य स्य[1] शिरोधिं तरसा सङ्गम्य हीरभूपालेनेति चमूपतिपदाभिषिक्तमनीकेहानुषक्तमसक्तं समीकाभीकेनानुगतपरःशतशतघ्नीकेन धृतभीषणनलिकसैनिकेन बहुलहूणानीकेन सह प्रस्थापयामास ॥

1. P. omits स्य

संस्कर्तुष्टीका

नूतनपुरे चन्द्रपत्न्या सह वर्तमानम्। चान्द्रिं चन्द्रापत्यम्। अतन्द्रिं अनलसम्। अनवर्द्धिदस्योः। दस्युश्चोरः। स्य छिन्धि। शिरोधिं कण्ठम्। हीरचन्द्राभ्यां दूतमुखेन प्रार्थितसाहाय्यकः प्रांशुहूणनृपालः डूलेनामकः सबलं चन्द्रपुत्रं राजाभिधानं पितृसाहाय्याय आमूरुदुर्गं प्रैषयत्। अनीकेहा युद्धोत्साहः। 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी। तयानुषक्तम्। असक्तमविघ्नितम्। अथवा सक्तः। समीके रणे अभीकेन निर्भयेन। शतघ्नीशब्दः conon इति ख्याते प्रयुक्तः, नालिकश्च gun इति ख्याते। हूणाः प्राग्हूणाः॥ दृप्यदिति। निर्मोकं व्योम। 'निर्मोके मोचने व्योम्नि' इति कोशः। अश्वीयमश्वसमूहः। वीरः राजाह्वयश्चान्द्रिः हीरमागादित्यन्वयः ॥ ३५ ॥ ३६ ॥ ३७ ॥

दृप्यत्प्रत्यर्थिसैन्यप्रतिभयसुभटक्ष्वेलितैश्चन्द्रसूनु-
भिन्दन् निर्मोकमुद्यत्पटहकरिघटाश्वीयगंभीररावैः ।
वेगादागादभीकः प्रथितभुजबलः प्राप्तमामूरुदुर्गं
वीरो हीरं निरुन्धन्नुरुबलरजसां श्रेणिभिर्द्यां महीं च ॥ ३५॥

दक्षिणामथ दिशं प्रति यान्तं हीरभूपमनवर्द्धिनृपालः ।
[1]वारयेति तरसा स नियुक्तो नासरक्षितिभृता सुभटाग्रयः ॥३६॥

राजशासनमसौ शिरसा तन् पूजयंस्तमनवर्द्धिनृपालः ।
हीरमप्रतिमपौरुषभाजौ वीरसन्नुनभुजोऽभिजगाम ॥ ३७ ॥

तं समीक्ष्य रुषितं सह सैन्यैरभ्यमित्र्यमनवर्द्धिनृपालम् ।
सज्जते स्म सहसैव ससेनः[2] संयुगाय स तु हीरमहीन्द्रः ॥ ३८ ॥

अन्येद्युः प्रधनसमुद्यमं प्रभाते
वीराणां शिबिरयुगेऽञ्जसा भयषाम् ।
निःसाणध्वनिभिरभून्निवेदयद्भिः
संक्षोभश्चकिततिमिङ्गलस्य वार्धेः ॥ ३९ ॥

---

1. M. चारय . P. स तेन

संस्कर्तुष्टीका

तामिति । रुषितं कुपितं सैन्यैस्सह अभ्यमित्र्यं शत्रुं प्रति अभियान्तं 'यो गच्छत्यलं विद्विषतः प्राति । सोऽभ्यमित्र्यः—' इत्यमरः । तमनवर्द्धिनृपालं समीक्ष्य ससेनः स हीरमहीन्द्रस्तु सहसैव संयुगाय सज्जते स्म ॥ ३८॥अन्येद्युरिति । प्रधनं युद्धम् । शिबिरयुगे शिबिरद्वये । अञ्जसा द्राक् । निवेदयद्भिः प्रधन-समुद्यममित्यन्वयः । निस्साणध्वानिभिः प्रस्थानवाद्यध्वनिभिः । चकित तिमिंगिलस्य वार्धेः संक्षोभः अभूत् ॥ ३९ ॥ निवेशभूमेः शिबिरप्रदेशात् ।

निर्यत्तद्बलयुगलं निवेशभूमेः प्रक्षुभ्यज्जलनिधिसन्निभं दिदृक्षुः ।
आरूढो रथमतिवेगरथ्ययुक्तं पूषागादुदयतटं स्फुटं तदानीम् ॥४०

सुभटभुजविभूषणेषु भास्वान्
असिषु धृताकृतिराबभौ निरोद्धुम् ।
निधनमिव मुहुः स्वबिम्बभेदं
[1]मनसि विचिन्त्य समागतोऽखिलानाम् ॥ ४१ ॥

[2]अथैवमुभयोर्हृष्यत्सैन्ययोर्युधि सैन्ययोः ।
हीरानवर्द्धिनृपयोरद्भुतोऽभूत् समागमः ॥ ४२ ॥

ततस्तु हीरमहीपतिशासनेन समन्ततः समाहतेषु युगपद्
गभीरारावबाधिरीकृतनिखिलहरिदन्तरेषु भयानकेषु आनकेषु

1. Gap here in M. 2 P omits this verse.

संस्कर्तुष्टीका

रथ्या अश्वाः । पूषा सूर्यः ॥ ४० ॥ सुभटेति । सुभटभुजविभूषणेषु आसिषु धृताकृतिः प्रतिबिम्बितः भास्वान् सूर्यः स्वबिम्बभेदं स्वमण्डलभेदनं मनसि विचिन्त्य तत्कारणं तेषा निधनं वीरमरणं निरोद्धुमिव समागतः प्राप्तः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥'' इति रणे पतन्तश्शूराः स्वर्गं गच्छन्तः ममैव मण्डलं भेत्स्यन्तीति मनसि चिन्तयन् तेषां शूराणाम् असिषु प्रातिबिंबरूपेण आगत्य तेषा निधन निरोद्धुमिव समागत इति उत्प्रेक्षा ॥ ४१ ॥ अथेति । हृष्यत्सैन्ययोः हृष्यत्सैनिकयोः । 'सैन्यं सैनिकसेनयोः' इति हेमचन्द्रः ॥ ४२ ॥ भयानकेषु भयंकरेषु । आनकेषु 'आनकः पटहे भेर्यां मृदंगे' इति मेदिनी । घनाघनः वर्षुको मेघः । केतनं ध्वजः । किम्मीरः चित्रवर्णः ।

घनाघनमन्द्रध्वनिना नानाविधकेतनरत्नकिंमीरप्रभासंवलितां चित्रयता मित्ररुचिं स्फुरता प्रजवतुरङ्गेण शताङ्गनिकुरुम्बेण निरुद्धेषु समरभूभागेषु, समुल्लसत्प्रासकल्लोलमालैः परिस्फुरितप्रकीर्ण[क]-डिण्डीरकश्रेणिभिः जलनिधिसलिलैरिव उच्छृङ्खलम् अश्वीयैरावृतेषु दिङ्मुखेषु, समरोद्धर्षारचितास्फोटितक्ष्वेलितैः मुहुर्मुहुः 'प्रहरत, प्रहरत' इति प्रगल्भवाग्भिः योद्धृमुख्यैः अभ्यमित्रमुज्झितानां प्रतिफलितभास्वद्दीधितिदीपितानां प्रस्फुरदैरावतीकान्तीनां महतीनां हेतीनां संहतिभिः सर्वतोऽपि विहायसे निबिरीसे, [1]प्रद्रुतरथचरणरिङ्खद्घोटकतल्लजखुरपुटपटलपरिक्षुण्णक्षोणीसमुत्थैः धूमधूम्रैः अभितः सञ्चलदुरुतरसमीरविसृत्वरैः सत्वरम् उपागतकृतान्तप्रतीककान्तिकूटैरिव दुष्प्रेक्ष्यैः परागैः पिहितेषु अखिलसैनिकलोचनपथेषु, अभिलक्ष्यम् उद्धृतायतपृथुलनलिकजालकप्रोद्यत्किलिकिलाविद्युदुद्भासितेषु[2]बहुलेषु महितविबुधस्तुतगुरुवैभवमहाराजविजयानन्दरङ्गेन्द्रप्रहितेषु हूणबलाहकेषु परितः सरभसमुद्भटध्वनितपुरस्सरानिस्तुलरङ्गगुलिकाश्मनः प्रवर्षत्सु, संवर्तसमयविजृंभितमिलिताविश्रृङ्खलाशेषजलधरस्तोमानिष्पतन्निर्घातनिध्वानाधिक्करणपटुतरकठोरठात्कारसम-

1. M. corrupt here. 2. P. omits this word.

संस्कर्तुष्टीका

किंमीरप्रभासंवलितां मित्ररुचिं सूर्यकान्तिं चित्रयता चित्रीकुर्वता । प्रासः कुन्तः । डिण्डीरः फेनः । परिस्फुरिताः प्रकीर्णा डिण्डीरस्य श्रेणयः येषां तानि, तैः । समरोद्धर्षाद् आरचितानि आस्फोटितानि अंसताडनानि क्ष्वेलितानि उत्प्लवनानि, तैः । ऐरावती विद्युत् । निबिरीसे निबिडे । प्रतीका अवयवाः । तेषां कान्तिकूटैरिव दुष्प्रेक्ष्यैः । उद्धृतायतेति ।

समयनिरर्गलविनिर्गलितप्रज्वालितोच्चावचपृथुलग्रावखण्डेषु शतघ्नीषण्डेषु दावहुताशेष्विव प्रदहत्सु पृतनारण्यानीं मानी सांयुगीनजनाग्रगण्यः सुचिरमाकलितसमरः [1]सहस्तैरपि विहस्ततामुपगतैः, प्रमादिभिः सादिभिः, विषादिभिः निषादिभिः, कलितहेतिदातिभिः[2] पदातिभिः साकं प्रक्षीणबलसमृद्धिः अनवर्द्धिः त्रिशङ्कुरिव निधनानुकूलाहवोद्यतविश्वामित्रवशङ्गतः पतङ्गवत् प्रोच्चलितहेतिहीर[3]वीरवीतिहोत्रसात्कृतनिजगात्रः स्वस्स्थितिमभजत ॥

हीरेण तस्मिन्निहतेऽनवर्धौ वृष्णेव वृत्रे मथितद्विपाश्वम् ।
निर्मुक्तशस्त्रं निपतच्छिरस्त्रं दुद्राव दूरं बलमाशु तस्य ॥ ४२ ॥

1. P समस्तैः 2. Missing in P. 3. M. corrupt here.

संस्कर्तुष्टीका

किलिकिला अग्निगोलकस्फोटेन नलिकसमूहेभ्यः उद्यन् शब्दविशेषः, तस्य च सज्योतिष्कस्य मेघेषु सस्तनितमुद्यद्विद्युत्साद्दश्यम् । विबुधा देवाः, पण्डिताश्च । गुरु बृहत् । गुरुः बृहस्पतिः । विजयानन्दरङ्ग एव इन्द्रः । तेन प्रहितेषु हूणा एव बलाहकाः मेघाः, तेषु । रङ्गगुलिकाश्मनः अश्मतुल्या रङ्गेन त्रपुणा निर्मिता गुलिकाः । संवर्तसमयः प्रलयसमयः । निर्घातः सवज्रपात आसारः । प्रज्ज्वलितेति । सज्वलनपृथुलग्रावतुल्यगोलकखण्डेषु । शतघ्नीषण्डेषु तथोक्तयन्त्रसमूहेषु । विहस्ततां व्याकुलताम् । सादिभिः अश्वारोहैः । निषादिभिः हस्त्यारोहैः । कलिता हेतीनां दातिः छेदः येषां ते, तैः । 'दाप् लवने' । निधनं निपातः, नाशश्च । आहवो यज्ञः, युद्धं च । विश्वामित्रो महर्षिः, पक्षे विश्वानि अमित्राणि । वीतिहोत्रोऽग्निः । स्वस्स्थितिं स्वर्गस्थितिं, मरणं च ॥ हीरेणेति । वृष्णा इन्द्रेण । निपतच्छिरस्त्रम् निपतदुष्णीषम् ॥ ४२ ॥ निहत्येति । समाव युद्धे । मृत्युजित् 'मुर्तासा अली खान्' नामा

निहत्य रिपुमुद्धतं झटिति दुर्मदं मन्त्रिभिः
समित्ययमवन् जनं चरणगं कृपालुर्नृपः ।
समेत्य सह सेनया निभृत*मृत्युजित्पूजितः
पुरीं मुदमगात् स्फुरद्ध्वजवतीमथार्काटिकाम् ॥ ४४ ॥

हीरः श्रीमांस्तु हर्षादधिकृतमकृत स्फीतकीर्तिः कृतज्ञः
प्राज्ञं तं चन्द्रसंज्ञं निखिलनृपनुतो वीरमार्काटिकायाम् ।
प्राप्तश्रीः सोऽपि कामं प्रमुदितहृदयो हीरमासाद्य धीरं
रेजे राजत्प्रतापस्तनय इव तदा राघवं सप्तसप्तेः ॥ ४५ ॥

निभृतमन्तिकतः कलितस्थितिं तमथ हीरमहीपतिरूचिवान् ।
विजयरङ्गकृतोपकृतिं स्मरंस्तदवलोकनजातकुतूहलः ॥ ४६ ॥

अयि भवदनुषङ्गात् प्राप्तवानस्मि मित्रं
जगति विदितमुच्चैः पुण्ययोगैकलभ्यम् ।
निहतरिपुनिकायः प्राप्तसीमः कृतीतः
कथय किमिह कृत्यं कृत्यवित्त्वं यतोऽसि ॥ ४७ ॥

को. टि.

* P. मृत्युजिन्नाम कश्चन यवनेश्वरः वेल्लूरुनगरस्थ इति ज्ञातव्यम् ।

संस्कृतटीका

वेल्लूरुदुर्गाधीश्वरः स्वयमार्काटिकाधिपत्याभिलाषी च । अमुं च दशलक्षद्रव्य-प्रदानेन चन्द्रहीरौ असाधयताम् । आर्काटिका पुरी समेत्य मुदमगात् ॥४४॥ हीर इति । हीरः प्राज्ञं वीरं चन्द्रसंज्ञम् आर्काटिकायामधिकृतमकृत । सोऽपि चन्द्रोऽपि । राघवमासाद्य सप्तसप्तेस्सूर्यस्य तनय इव सुग्रीव इव ॥ ४५ ॥ ४६ ॥ अयीति । अनुषङ्गात् सम्बन्धात् । मित्रमानन्दरङ्गम् । कृतीतः कृती कृतार्थः, इतः, इतःपरं किं कृत्यमित्यन्वयः ॥ ४७ ॥ ४८ ॥

तदाकर्ण्य वचश्चन्द्रः सनयं विनयान्वितः ।
अवोचन्मुदितः प्रोद्यन्मधुरस्मितचन्द्रिकः ॥ ४८ ॥

राजन्नानन्दरङ्गक्षितिपतिरधुना माननीयः प्रयत्नाद्
द्रष्टव्यश्च प्रवृद्धः सुहृदपि भवतः किञ्च शत्रून् जिगीषोः ।
आयत्यामस्ति तेन प्रबलबलजुषा हीर साह्यं विधेयं
वीरेण स्फीतकीर्तेः शृणु चरितमिदं तस्य गांभीर्यवार्धेः ॥४९॥

यस्मिन्नायोधनोर्वीमधिवसति [1]सगर्वैङ्गिलानां वधाय
प्राप्तुं कान्तानभीष्टानहमहमिकया नाकलोकागताभिः ।
साकं [2]पत्रैर्विचित्रैरुपकरणशतालंकृतैरप्सरोभिः
सूचीभेद्यान्तरालत्रुटिरहितमभूत्तत्क्षणादन्तरिक्षम् ॥ ५० ॥

किञ्च—जेत्रा येनेङ्गिलानां कनकमयमुरोभूषणं वेत्रयष्टि-
स्तुष्टादष्टापदाढ्याधिकमहिमकरी पारसीकक्षितीशात् ।

---

1. M. corrupt here. 2. P पुत्रैः

संस्कर्तुष्टीका

राजन्निति । प्रवृद्धः सुहृत् रूढस्नेहः सुहृत् । आयत्यां भविष्यति काले ॥४९॥ यस्मिन्निति । इङ्गिला आङ्ग्लेयाः । कान्तानभीष्टान्, युद्धे निहतेषु वीरेषु स्वाभीष्टान् रमणान् । अहमहमिका अहपूर्विका । नाकलोकः स्वर्गः । पत्रैः वाहनैः विमानैरिति यावत् । अन्तरालत्रुटिः अन्तराललवः, तेनापि रहितम् । असंख्या रिपवो हता इत्यर्थः ॥ ५० ॥ जेत्रेति । क्रिस्तु १७४८-तमे वर्षे आङ्ग्लेयैः नूतनपूरी रुद्धा । तदा आनन्दरङ्गेण प्राञ्चुहूणाधिपतये बहु साहाय्यमाचरितम् । १७४९-तमवर्षप्रारम्भे प्रीतैः प्राञ्चुहूणाधिकारिभिः आनन्दरङ्गाय ''दुभाष्'' इति ख्यातं सचिवपदं व्यतीर्यत । पारसीकक्षितीशात् । अत्र 'पारिस्' इति ख्याता ऐरोपाखण्डे वर्तमाना प्राञ्चुराजधानी अभिप्रेता,

उत्तंसः स्थूलमुक्ताफलगणरचितश्चोत्तमोऽलम्भि राजन्
सम्मानं युक्तरूपं कलय कलयतः साह्यमासस्य तस्य ॥

अथ एवमभिहितवन्तम् अहिततातिकृतान्तम् अवगत-निजस्वान्तं स्वहितं तं नितान्तम् अभिनन्द्य अविनिन्द्यचरितं सुचरिताय विरचितानर्तसाह्याय रिपुजनाजय्याय [1]महनीयाय आर्यजनानुवर्तनानवरतधृतान्तरङ्गाय मत्तमातङ्गवत् सन्तताश्रिता-लिहितदानवारिविराजमाननिजाङ्गाय विजयानन्दरङ्गाय निस्तुलानि वस्तूनि महार्हाणि गर्हितविमततमःपूषा प्रेषयन् सहर्षमकवोज्ज्वल-गुणमौक्तिकहारो हीरनृपालः अतिमात्रहर्षितसमरजैत्रमहामात्रकृतानु-यात्रः सर्वदा निस्तन्द्रेण सह चन्द्रेण चान्द्रिणा च स्वविश्राणितबहु-तरपारितोषिकपरितुष्टमनस्कतया भृशमविगणितवलजपरिश्रमैः अश्रा-न्ताकलितविचित्रवारवाणैः हूणानीकैरनेकैः चतुरङ्गिण्या प्रहर्षिण्या अनीकिन्या च परिवृतः सुहृद्दर्शनलालसः स्वागमनश्रवणसंभूता-खण्डानन्दभरितस्वान्तविजयानन्दरङ्ग[2]महाराजप्रांशुहूणराजाज्ञप्ता-धिकृतपुरुषालंक्रियमाणाखिलप्रतोलीकम् उच्छ्रितनिकेतनलसन्नट-त्पटकेतनं नूतनपुटभेदनम् अभिप्रतस्थे ॥

1. omitted in P. 2. रङ्ग missing in M.

संस्कर्तुष्टीका

तत्रत्यः प्रांशुराज एव पारसीकक्षितीश इति अत्र व्यवहृतः। कनकमयमुरोभूषणं, कनकखचिता वेत्रयष्टिः, मुक्ताफलरचित उत्तंसश्च तत्सचिवपदचिह्नभूतान्याभरणानि ॥५१॥ आनर्तसाह्याय । आनर्तः समरः । आश्रितानां आलयः समूहाः । आश्रिता अलयो भृङ्गाः । दानवारि मदजलं दानोदकं च । पूषा सूर्यः । अकवः उदारः । महामात्रः मुख्यमन्त्री चान्द्रिणा राजासाहिबाह्वयेन ।

वल्गत्तुरङ्गतिमिरीशधृतप्रतीका
वल्गुद्विजालिभरितारणितानुकूला ।
निष्पङ्कजीवनसमीरबलानुविद्धा
भागीरथीव पृतनानुजगाम हीरम्* ॥ ५२ ॥

को. टि.

* P. श्लिष्टम् । 'तिमिरी, आरणी, चेतिपट्टु' इति दुर्गत्रयमास्ति । वल्गत्तुरङ्गतिमिरीशधृतप्रतीका तादृशतिमिरीशेन तिमिरिनाकमदुर्गाधिपेन धृतप्रतीका तत्प्रेषितकतिपयसैन्ययोगेन भूयिष्ठतरा । वल्गुद्विजालिभरितायाम् आरण्यां विषये तया दयया अनुकूला । 'करुणायां तु ता स्त्रियाम् ।' निष्पङ्कनग...(मी)राख्यः कश्चिद्यवनः । अन्यत्सुगमम् ।

संस्कर्तुष्टीका

वलजपरिश्रमः । वलजं युद्धम् । 'वलजं गोपुरे सस्ये क्षेत्रसंगर-योरपि ।' इति हेमचन्द्रः । वारबाणः कवचः । प्रतोली रथ्या ॥ वल्गदिति । वल्गन्तः तुरङ्गा जलतुरङ्गाः तिमयश्च यस्यां सा । ईशधृतप्रतीका शङ्करधृतैकभागा । वल्गु मनोहरं द्विजालीनां भृङ्गसंङ्घानां भरितमारणितं रींकारः । तस्य अनुकूला स्वजलविकासितपद्मादिभिः । निष्पंकं जीवनं जलं यस्याः सा । सा च समीरबलेन वायुरंहसा अनुविद्धा च । इति भागीरथीपक्षे । हीरसेनापक्षे वल्गत्तुरङ्गबलः तिमिरीशः तिमिरिनामकदुर्गपतिः तद्धृताग्रभागः । द्विजालिभरिता ब्राह्मणसमूहभरिता आरणिः तन्नामकदुर्गः । तास्मिन् विषये तया दयया अनुकूला । पङ्कपदेन चेत्तुपट्टुनामकदुर्गोऽभिधीयते, नामैकदेशग्रहणन्यायेन । 'मीर' इत्यनेन तत्स्थलपतिः 'मीर् असद्' नामकयवनोऽभिप्रेतः । पङ्कान्निर्गतेन त्जीवनभूतेन मीरसहितेन बलेन अनुविद्धा ॥ ५२ ॥

अधिगत्य तदा तदागमं सविधे रङ्गसुधीः स हूणराट् ।
रभसागतदूतवाक्यतो रभसोल्लासिमना बभव ह ॥ ५३ ॥

अनन्तरमसौ परन्तपः परं तपन इव तेजस्तिरस्कृतप्रतीप-तमःस्तोमः समस्तक्ष्माभृदतिशायिमाहिमवता हिमवतेव सन्तता-हवोत्सवाभिलाषिनित्यसन्निहितनिर्जरलोकसेवितपादेन पोषितार्येण हूणवर्येण सादरमाज्ञप्तो विज्ञचक्रवर्ती चक्रपाणिरिव नित्यानपा-यिश्रीः श्रीमता अतिमात्रहर्षेण सत्रा महामात्रजनेन अभिप्रतस्थे ॥

ततश्च तदात्व एव समन्ततः समाहतपरश्शतभेरी-गभीरभांकारप्रतिध्वनितनिखिलदिक्पालकसौधजालजालकेन अनु-गतबहुलबलेनाभिगम्य पुरस्कृतोपहारेण यथोचितमाकलितोप-चारेण सुहृद्दर्शनजनितानन्दभरितान्तरङ्गेण विजयानन्दरङ्गेण सङ्गतौ, आगतौ अभिनवपुटभेदनाभ्यर्णम् , अधिगतबहिःप्राकार-प्रतीहारः सरभससमुत्थितकरगृहीतशिरस्त्रप्रवणप्रतीहारविसरानु-गतः पुरोगतवन्दिजनसंस्तूयमानशौर्यादिगुणस्तोमः प्रांशुहूण-सार्वभौमः प्रथितानुपमगुणसान्द्रौ महावीरहीरचन्द्रौ कल्पित-कल्पनोन्नतकरटिमल्लाधिरूढौ सविधगतसविनयचान्द्रिनिवेद्यमान-रामणीयकं नवीननगरं विलोकयमानौ आनाय्य निजभवनम् अमानुषविचित्रतरमहार्हवसनभूषणादिभिः पूजयामास ॥

---

संस्कर्तुष्टीका

अधिगत्येति । रभसोल्लासीति । 'रभसो वेगहर्षयोः' ॥ ५३ ॥ प्रतीपाः शत्रवः । आहवः यज्ञः युद्धं च । निर्जरा देवाः अवृद्धाः तरुणाश्च । सत्रा सह ॥

माहात्म्यं हूणनेतुर्मघवत इव तद्वीक्ष्य शक्तिं मतिं तां
स्फीतां श्रीरङ्गनेतुः श्रितविबुधतरोः श्रीमतो हीरवीरः ।
प्रोद्यत्प्रद्योतनाभैर्नवपुरमुरुभिः सद्मभिः पद्मराग-
प्रत्युप्तोत्तुङ्गसौधैर्हसितसुरपुरं सोऽतिमात्रं ननन्द ॥ ५४ ॥

चन्द्रोऽपि रङ्गेन्द्रमुपेत्य हर्षादाश्लिष्य गाढं सुदृढानुरागम् ।
संमानितस्तेन सहोपविष्टः प्रोवाच वाचं मधुरां प्रगल्भाम् ॥ ५५ ॥

अयि सखे भवतः कृपयाधुना प्रणतवाञ्छितपोषणहेतुना ।
अधिगताखिलसम्पदवाप्तवानधिकमास्मि यशः सुहृदस्त्वहम् ॥ ५६ ॥

अयि कृतं मयि कारुणिक त्वया तदिह न प्रतिकर्तुमहं क्षमः ।
उपकरोति जनः किमथैधितो निखिलजीवनहेतुपयोमुचा ॥ ५७ ॥

इति वदन्तमुदारमुदारधीर्विजयरङ्गनृपो विजयोज्ज्वलम् ।
विजयसारथिवत्कृतसाह्यवानुचितमाकलिताद्यतिरूचिवान् ॥ ५८ ॥

न हेतुरस्मिन्नहमीदृशेऽर्थे परं तु राज्ञः प्रथितः प्रभावः ।
हरेर्भिनत्ति क्षितिभृद्गु[1]होद्यत्प्रतिध्वनिः पश्य मदावलेन्द्रान् ॥५९॥

---

1. M. and P. ग्रहोद्यत्

---

संस्कर्तुष्टीका

अभ्यर्णम् समीपम् । प्रतीहारो द्वारः । प्राशुहूणसार्वभौमः डूप्ले-नामकः । प्रवणाः प्रह्वाः । निसरः समूहः । कल्पना करिणः पृष्ठे वाहनार्थमासनाद्यारोपणेन सज्जीकरणम् । करटिमल्ला करिणी ॥ माहात्म्यमिति । श्रितविबुधतरोः आश्रितकल्पवृक्षस्य । प्रद्योतनः सूर्यः ॥५४॥५५॥ अयि सख इति । अधिकं यशः आप्तवानस्मि । सुहृदो भवत इत्यन्वयः ॥ ५६ ॥ अयि कृतमिति । एधितः वृद्धिं प्रापितः । उपकरोति किं प्रत्युपकरोति किम् ॥५७॥

इत्थमन्योन्यवाग्गुम्भसम्भावितपरस्परौ ।
रङ्गेन्द्रचन्द्रौ सम्प्राप्तसान्द्रानन्दौ बभूवतुः ॥ ६० ॥

इति [1]श्रीवत्सकुल[2]तिलकायमानश्रीगङ्गाधराध्वरिसुधाब्धिसुधाकरेण
श्रीपार्वतीगर्भसंभवेन श्रीनिवासकविना विरचिते
श्रीमदानन्दरङ्गविजये चम्पूकाव्ये
षष्ठः स्तबकः ॥

॥ अथ सप्तमस्तबकः ॥

ततस्तु हूणप्रवरेण हीरः सानन्दरङ्गेण सुधीः सचन्द्रः ।
संमन्त्र्य तञ्जाख्यपुरीं प्रतस्थे प्रतापसिंहं तरसा जिगीषुः ॥ १ ॥

श्रीमानानन्दरङ्गस्तदनु नरपतेराज्ञया हीरचन्द्रौ
निस्तन्द्रं जेतुकामौ रिपुनिहवमनुप्रेषयामास हार्दात् ।
मूशेलत्तोसुलासौ प्रथितभुजबलौ हूणसैन्यैः सशस्त्रैः
सेनेशानुग्रवीर्यान् भुजभरवशगांस्त्रीन् तुरुष्कान् सनिष्कान् ॥२॥

1. M. श्रीमत्  2. P. तिलक

संस्कर्तुष्टीका

इतीति । विजयसारथिवत् कृष्णवत् । कृतं साह्यमस्यास्तीति कृतसाह्यवान् । आकलिताद्दतिः आकलितादरः ॥ ५८ ॥ न हेतुरिति आनन्दरङ्गस्य विनयोक्तिः । राज्ञः डूप्लेनामकस्य । हरेर्भिनत्तीति । यथाह कालिदासः (वि. उ. १. १७) 'ननु वज्रिण एव वीर्यमेतद्विजयन्ते द्विषतो यदस्य पक्ष्याः । वसुधाधरकन्दराविसर्पी प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥'

इति आनन्दरङ्गचम्पूकाव्ये संस्कर्तृ राघवशर्मणष्टीकायां
षष्ठस्तबकटीका ।

ततः स गच्छन् युवरङ्गमाजौ विजित्य हीरः सह मालवेन ।
ययौ गृहीताखिलभागधेयः प्रतापसिंहस्य पुरोपकण्ठम् ॥ ३ ॥

अथ तथाविधहीरपतिशासनवशंवदबहुलतरसैन्यगम्भीरगर्जितमेदुरितसमरसन्नाहपैशुनलंपटपटहपटलनिनदश्रवणजनितोद्वेगसवेगधावत्पौरनिकरकोलाहलमुखरितनिखिलहरिदन्तरान् नगरान्तरात् सागरान्तरात् हीरचमूवेलामभिपततः समुत्तुङ्गतरङ्गरङ्गानिव साटोपमुद्भटान् अधिरूढवल्गद्धाराटान् करतलोल्लसितपट्टसखेटान् मराटान् विदारितारिकूटानपि वराटान् मन्यमानाः तन्तन्यमान-

---

संस्कर्तुष्टीका

अथास्मिन् सप्तमस्तबके हीरचन्द्राभ्यां चोलमण्डलं प्रति युद्धाय गमनम्, तञ्जापुरीरोधः, अत्रान्तरे नासरजङ्नामकेन निजांपदास्थितेन हीरमातुलेन हीर-चन्द्र-प्रांशु-गर्वनिर्वापणाय 'कर्णाटकं' प्रत्यागमनम्, नूतनपुरीरोधः, हीरस्य सजीवग्राहो नासरेण, नासरेण चेञ्जीं प्रति गमनम्, प्रांशुहूणैः परस्परमस्निग्धानां नासरामात्यानां मध्ये मन्त्रशक्त्या भेदः, अन्ते नासरशिरःकृन्तनम्, हीरस्य मोचनम्, तस्य निजांपदे समुद्घोषणं च ॥

ततस्त्विति । हूणप्रवरः डूप्लेनामकः । तञ्जाख्यपुरी चोलराजधानी । प्रतापसिंहः तत्रत्यो महाराष्ट्रराजः ॥ १ ॥ श्रीमानिति । निस्तन्द्रं रिपुनिवहं जेतुकामौ हीरचन्द्रावनु प्रेषयामासेत्यन्वयः । हार्दात्स्नेहात् । 'मूशे-लत्तोसु-लासौ' M. de a Touche, M. Law इति विदितौ द्वौ प्रांशुहूणसेनापती । मूशे Monsieur इति प्रांशुभाषायां गौरववाचकं पदम् । मुझभरः 'मुझफ़र खान्' इति 'अब्दुल् रहमान् पैक्' इति च ख्यातो यवनयोधमुख्यो नूतनपुरीस्थः । सनिष्कान् सहेमाभरणान् ॥ २ ॥ युवरङ्गम् 'ओडयर् पालयम्' इत्यद्यापि विदितं तञ्जापुरी-त्रिशिरःपल्ली-समीपवर्ती प्रदेशः । तस्य पतिः युवरङ्ग इति, मालवः द्राविड्यां மழவ இति ख्यातः । तेन सह तञ्जापुरीसमीपं, तञ्जा-

जन्यं सांयुगीनजनमूर्धन्यदुरभिमानं मानाभिधानमपि विधाय कान्दिशीकम्[1]भीकाः प्रतिभटानीकप्रतीकपाटनपटुतरगिरिसारमय-पृथुलरङ्ग[2]गुलिकोद्गारिनलिकजालकप्रहरणाः सन्ततसन्धुक्षितशत-घ्नीभग्नपुरमहावरणा हूणाः सर्वतः परिगत[3]परिखापरिसरैः निरुद्धतदीयासारैः सेनाविसरैः क्षणेन तत्पुटभेदनं निरुच्छ्वासयांचक्रुः ॥

अथ प्रतापकेसरी रथद्विपाश्वसंकुलं
सपत्नकं निरीक्ष्य तद् विपत्तिमन्निजं बलम् ।
निरुद्धमञ्जसा पुरं सुबुद्धिरात्मनस्तदा
सरङ्ग एव भूपतिः शरण्य इत्यमन्यत ॥ ३ ॥

---

1. M. अह्रीकाः 2. M. omits रङ्ग 3. M. परिवृत

संस्कर्तुष्टीका

निकटवर्तिमार्यम्बालय (மாரியம்மன் கோவில்) नामकं स्थानं ययौ ॥२॥ पैशुनं पिशुनत्वं सूचकत्वं तत्र लम्पटः सतृष्णः । नितरां व्यञ्जक इति यावत् । धाराटाः अश्वाः । 'धाराटश्चातकेऽश्वे च' । पट्टस आयुध-विशेषः । खेटः शरीरत्राणाय धृतः चर्मखण्डः फलकखण्डो वा । मराटान् तञ्जापुरीयान् महाराष्ट्रीयान् । वराटान् नीचान् तुच्छानिति यावत् । 'रज्जौ वराटः' इत्यारभ्य 'नीचेऽथ द्वे' इति केशवस्वामी । तन्तन्यमानजन्य बहु युध्यन्तम् । सांयुगीनेति । आत्मानं योधश्रेष्ठं मन्यमानम् । मानाभिधानं 'मानोजि-अप्पा'नामानं मराटसेनापतिम् । कान्दिशीकं भयात्पलायितम् । महावरणं प्राकारभित्तिः । निरुद्धः तदीयः तञ्जेश्वरीयः आसारः सेनायाः प्रसरणम् । 'स्याद् आसारः प्रसरणम्' इत्यमरः । तत्पुटभेदनं तञ्जाख्यम् । निरुच्छ्वासयांचक्रुः गाढं रुरुधुः ॥ अथेति । प्रतापकेसरी प्रतापसिंहः तञ्जापुरीराजः । सरङ्गः आनन्दरङ्गसहितः । भूपतिः डूप्लेनामकः । अधिकबलं

ततस्तु हीराय सुदुर्जयाय करप्रदानं कलयन्नपीष्टम् ।
नृपः स रङ्गेन्द्रदयावलंबाद् विहस्तभावं विजहौ विचित्रम् ॥ ४ ॥

स सहूणबलैः सैन्यैः साकं हीरमहीपतिः ।
गन्तुं नव्यपुरीं प्रीतः सचन्द्रः कृतवान् मतिम् ॥ ५ ॥

अत्रान्तरे—

गत्वा स्वीयममोघवर्गमवधीद्धीरोऽनवधिं पुन-
र्धृष्टो मामवमत्य देशमखिलं स्वीकृत्य निःसाध्वसः ।
आस्ते संप्रति दुष्टधीरिति रुषा सूनुर्निजामेशितु-
र्जाल्मो हन्तुमिमं ततस्ससचिवो याम्यां प्रतस्थे दिशम् ॥ ६ ॥

दर्पेण युक्तमथ रोषवशेन यान्तं
श्रुत्वा ससैन्यमविनीतमपास्तनीतिम् ।
तं नासरं सदसि सर्वनुतप्रभावो
डिल्लीश्वरः कृतमतीन् सचिवानफाणीत् ॥ ७ ॥

---

संस्कर्तुष्टीका

शत्रुं विभाव्य सन्धये आनन्दरङ्गं प्रार्थयमासेति भावः ॥ ३ ॥ ततस्त्विति । आनन्दरङ्गदयावलम्बाद् विहस्तभावं व्याकुलतां हस्तविहीनतां च विजहौ॥४॥ स सहूणेति । वस्तुतस्तु उत्तरदिशि आर्काटिकाप्रान्तं प्रति नासरः ससैन्यः समायातीति श्रुत्वा हीरचन्द्रौ नूतनपुरी प्रतिनिवर्तितुं निरणयताम् ॥ ५ ॥ अत्रान्तर इति नासरव्यापारानुसन्धिः । गत्वेति । स्वीयं स्वपक्ष्यम् । सूनुः निजामेशितुः । आसब्जापुत्रः नासर् जङ्नामकः । जाल्म इति नासरनिन्दा । याम्या दाक्षिणाम् ॥ ६ ॥ दर्पेणेति । डिल्लीश्वरः 'अहमद्षा' नामकः ॥ ७ ॥ मौढ्यमिति । खर्वेतरम् उन्नतम् । अप्रतीतं अज्ञातम्

मौढ्यं पश्यत नासरस्य सचिवा गर्वं च खर्वेतरं
कुर्वन् विप्रियमप्रतीतमपि मे हन्तुं मदीयं च तम् ।
गच्छत्यद्य रुषा तथापि विलयं यास्यत्ययं दुर्मति-
र्नूनं स्वामिविरोधिता प्रभवति क्लेशाय सर्वस्य हि ॥८॥

इत्थं सप्रतिघं निगद्य वचनं डिल्लीश्वरस्तत्क्षणं
दक्षस्येव हवोद्यतस्य तरसा दाक्षायणीवल्लभः ।
कर्तुं निग्रहमुग्रशौर्य[1]मतनोदादिष्टमिष्टं कृती
धीरं रङ्गमहीपतिं नवपुराधीशं सहूणेश्वरम् ॥ ९ ॥

आगाद्वेगादभीकैरखिलवसुमतीनायकैरुग्रवीर्यै-
राहूतैः ख्यातवृत्तैरुपचितसुमहाजन्यसन्नाहसैन्यैः ।
साकं रुष्टः सुदुष्टः प्रबलबलरजःपुञ्जनीरन्ध्रिताशः
कीनाशस्योग्रपाशैः सित इव नगरीं नासरः चेञ्जमाख्याम् ॥

अथ तदानीमेव सयत्ननिहितजाङ्घिकजागरूकापसर्पव्रात-निवेदितहूणपतिपुटभेदनविप्रकृष्टदेशसन्निविष्टहीरोदन्ताकर्णनलब्धा-

1. P. वीर्य

संस्कर्तुष्टीका

यथा तथा विप्रियं कुर्वन् । मदीयं च तं हीरं हन्तुम् ॥८॥ इत्थमिति । सप्रतिघं सरोषम् । हवोद्यतस्य यज्ञोद्यतस्य । दाक्षायणीवल्लभः शिवः । रङ्गमहीपतिम् वीरभद्रमिवेति वाक्यशेषः ॥९॥ आगादिति ॥ कीनाशस्य यमस्य । सित इव बद्ध इव । चेञ्जमाख्याम् नगरीं पर्वतदन्तुरप्रदेशम् अरुणाचलक्षेत्रस्य पश्चिमतः पेण्णानद्या उत्तरतो वर्तमानम् ॥१०॥ जाङ्घिकः जङ्घाजीवी पद्भ्यां गच्छन् सन्देशहरो दूतः स्पशो वा । अपसर्पः स्पशः । विप्रकृष्टदेश इति चोलमण्डल

न्तरेण समन्त्रिणा अमर्षमेदुरेण नासरेण समादिष्टान् पुरतः प्रहृष्टान् मुरारि-मोर-जानोजि-प्रमुखान् कृतमुखान् आपत्य महत्या सेनया मध्येपथं निरुन्धतो हीरमहीपतिः सरभसागतचारमुखावगतसकलैतदुदन्ततया परिशङ्कितनिजाभीलेन[1] विजयानन्दरङ्गभूपालेन वत्सलेन प्रेषितबहुलपार्ष्णिबलोपबृंहितः समागच्छंस्तांश्चभूपतीन् निर्धूय सचन्द्रः करतलोद्यतचन्द्रहासैः अतन्द्रैः अनेकैः अभीलुकैः हूणानीकैः सादिसहस्रैश्च अभिगुप्तः शनैः शनैः अभिनवनगराभ्यर्णभुवमाससाद ॥

आनन्दरङ्गेन्द्रमुपेत्य हूणक्षोणीपतिं तावथ हीरचन्द्रौ ।
निवेदितार्थौ पुनरेव ताभ्यां दत्ताभयौ स्वं शिबिरं प्रयातौ ॥११॥

संमन्त्र्यानन्दरङ्गस्तदनु नृपतिना त्रासयन्तं स सर्वान्
आयान्तं नासरं तं प्रबलबलतया वीक्ष्य धीमानभीकः ।

---

1. P. आहीलेन

---

संस्कर्तुष्टीका

इत्यर्थः । लब्धान्तरेण लब्धच्छिद्रेण । मुरारीति । मुरारि राव् , मोरोपण्डितः, जानोजिनिम्बाल्कर् इति नासरपक्षीया मराटयोधाः । कृतमुखान् निपुणान् । मध्येपथमिति । मुरारिराव्प्रभृतिभिः चोलमण्डलाद् नूतनपुरीं प्रतिनिवर्तमानो हीरचन्द्रौ चिदम्बरक्षेत्रसमीपे निरुद्धौ । प्रवृत्तेऽत्र युद्धे चन्द्रस्य मन्त्री शेषराव्नामको हतः । वार्तामिमामुपश्रुत्य चारेभ्यः आनन्दरङ्गेण नूतनपुरीतः सेना प्रेषिता, यया गुप्तौ हीरचन्द्रौ नूतननगरीं प्रापतुः । परिशङ्कितनिजाभीलेन परिशङ्कितनिजजनकष्टेन । पार्ष्णिबलम् पृष्ठतोऽनुयायि बलम् । चन्द्रहासा असयः । अभीलुकैः निर्भयैः ।

सर्वासु द्वार्षु गुल्मेष्वपि नलिकभृतो हूणवर्यान् शतघ्नीं
निक्षिप्य क्षिप्रमाप्तान् अतिबलसुभटान् हीरगुप्त्यै दिदेश ॥१२॥

अनीकिनीं व्यूह्य ततः सुगुप्ताम् अनेकहूणैरभितः सशस्त्रैः।
चन्द्रं सचान्द्रिं स पुरो विधाय हीरोऽप्रमत्तोऽरिजयाय तस्थौ॥१३॥

तदनु स नासरोऽपि परिपन्थिनिग्रहणाय परमाप्तानपि अवज्ञाय चमूपतीन् अतिदुरवगाहम् इतरैः अवगाह्य हूणबलसागरम् अभीकतया वसन्तं महान्तमुग्रं [1]तमरिदन्तिनिग्राह[2]परं हीरग्राहं अग्र्यपौरुषः सक्रोधं गृहीतुकामः सत्वरमतिविस्तृतैः उत्तुङ्गकेतुदण्डगुणमहीरुहैः अनलसानेकमहामात्रकर्णग्राहाधिष्ठितैः शताङ्गप्रवहणनिकुरुम्बैः सुतरामनिवार्यशौर्यवीर्यधैर्यधुर्यैः सोदर्यैरनुगतः कृत्स्नपृतनाध्यक्षसहनवासाख्यपुरःसरयवनामात्यमुख्यशतैः सचिवप्रवेकाभ्यां रामदासमोरोपण्डिताभिख्याभ्यां द्विजमुख्याभ्याम् अविनाभूतः समरदुर्जयः स्वस्वबलव्रातपरिवृतख्यातापदानचन्द्रसेनहनुमन्मुरारिजानोजिगदवालाहिंमद्बहादराब्दल्लप्रमुखसामन्तराजसहस्रैश्च समन्तादभिगुप्तः समागच्छन्

1. M. gap here. 2. M. निग्रह

संस्कर्तुष्टीका

संमन्येति। नृपतिना हूणपतिना ॥ १२ ॥ १३ ॥ परिपन्थिनिग्रहणायेति। अत्र परिपन्थी शत्रुर्नासरः तस्य निग्रहणाय आप्तान् चमूपतीन् हरिचन्द्रपक्षीयहूणचमूपतीन्। तान् अवज्ञाय स्वभागिनेयसजीवग्राहैकतानतया नासरः शत्रुबलं प्राविक्षत्। अरिदन्तिनिग्राहपरम्। निग्राहः पीडा, ग्रहणं वा। हीरग्राहम् हीर एव ग्राहो नक्रस्तम्। गजा निगृहीताः ग्राहैः पीड्यन्ते हि।

शोषयन्निव वार्धिम् उद्धूतसैन्यरजोभिः कवलयन्निव हूण-पुरम् असक्तं निर्भिन्दन्निव निर्मोकमतिगभीरभेरीभांकृतिभिः पातयन्निव पर्वतान् उद्भटसुभटवेगारभटीभिः चालयन्निव संख्यातीतसैनिकचरणतलनिक्षेपैः क्षोणीमण्डलमक्षौहिणीं वाहिनीशमभि-गन्तुं सहस्रमुखतामापन्नाम् अतिवेगवर्ती निर्जरतरङ्गिणीमिव चतुरङ्गिणीमाक्रममाणामध्यर्धयोजनं निजध्वजिनीं योजनमात्रे प्रत्यग्रनगर्या बिल्ववनमधिवसतो भगवतस्त्रिलोचनस्य पञ्चशरार्चित-चरणारविन्दस्य कोकिलाम्बारमणस्य कृपारसवाहिन्या[1] इव कोलतटिन्याः प्रथनसमुचिते रोधःप्रदेशे निवेशयामास ॥

1. M. gap here.

संस्कर्तुष्टीका

उत्तुङ्गकेतुदण्डानां शताङ्गैः गुणमहीरुहाणां प्रवहणैश्च अन्वयः । गुणमहीरुहाः गुणवृक्षकाः, कूपकाः, नौमध्यस्थरज्जुबन्धनकाष्ठस्तम्भाः । महामात्रैः महाप्रधानैः । कर्णग्राहैः कर्णधारः । तैः अधिष्ठितैः । शताङ्गानां रथाना प्रवहणाना पोतानां च निकुरुम्बैः समूहैः । सोदर्यैः निजानुजैः सलबद् जङ्, असद् जङ्, बसलद् जङ्, नैजाम् अलि इति ख्यातैः । सहनवासाख्यः 'षा नवास् खान्'नामकः । रामदास इति 'राजा रामदास्' नामकः सेनायां 'पेष्कार् बक्षी' स्थानेऽधिकृतः, यश्च नासरमरणानन्तरं हीराद् लब्धसंमानः राजारघुनाथदास इति नाम बभार । चन्द्रसेनादयः सामन्ताः स्वस्वबलैः नासरसाहाय्यार्थमागताः । कृष्णानदीसमीपे नारायणप्पेट्टै-नामकजागीर्प्रभुः 'राजा चन्द्रसेन'नामकः । हनुमन्तराव् नामकः कोऽपि मराटसर्दार् । गदवालः गदवालज़मीन्दार् रामराजाख्यः । हिम्मद्बहदुर् खान् कर्णूल् प्रदेशयवनपतिः । अब्दुल्लानामानः अनेके यवनमुख्या नासरसेनायामासन् । हूणपुरं नूतनपुरीम् । निर्मोकं व्योम । आरभटीभिः

क्रुध्यद्भीषणसैनिकाहतमहातोद्योद्यदत्यद्भुत-
ध्वानत्रस्तदिगन्तदन्तिचलनप्राप्तक्ष्माकम्पनम् ।
उत्तुङ्गध्वजवत्कनत्पटकुटीजालं विशालं भृशं
श्रीमन्नासरसार्वभौमशिबिरं तत्प्रेक्षणीयं बभौ ॥ १४ ॥

तत्क्षणं च युगविगमसमसमयसंभिद्यमानचतुरुदधिनिनद-शङ्कावहभयानकप्रत्यनीककोलाहलश्रवणेन परम् अकुण्ठितधैर्यः कण्ठीरव इव करटिबृंहितेन प्रवृद्धमन्युश्शतमन्युरिव अमोघपराक्रमः तरस्विभिः विक्रान्तैः प्रांशुनायकानीकैः निबिडीकृतोभयपार्श्वभागः समरसन्नद्धपुरः[1]स्थिताप्रमत्तचान्द्रिः अनुगतचन्द्रश्च जन्याय तदुचितवसुमतीमासाद्य हीरभूपालो वीराग्रणीः अतिष्ठत ॥

लसदुद्धृतभीमहेतिकं द्विषतः सैन्यमदृश्यताग्रतः ।
परिधूसरपांसुसंवृतं हिमसंछादितकाननोपमम् ॥ १५ ॥

---

1. M. वपुः

---

संस्कर्तुष्टीका

आरभटीभिः वीरभटक्ष्वेलितादिचेष्टितैः । वाहिनीशं समुद्रम् । निर्जरतरङ्गिणीं देवनदीं गङ्गाम् अध्यर्धयोजनमाक्रममाणां, तथा बृहतीम् । बिल्ववनं विल्लियनल्लूर् नामकशिवस्थलविशेषः पुदुच्चेरीनिकटवर्ती । पञ्चशरार्चितचरणारविन्दस्य अत एव कामेश्वर इति नाम बिभ्रतः । कोकिलाम्बेति तद्देवीनाम । कोलतटिनी वराहतटिनीति तत्र वहन्ती नदी, चेञ्जीनदीति च प्रसिद्धा । प्रथनं निवेशनम् । रोधःप्रदेशे तटप्रदेशे । युगविगमः प्रलयः । कण्ठीरवः सिंहः । शतमन्युरिन्द्रः । जन्याय युद्धाय । अतिष्ठत प्रकाशनार्थं आत्मनेपदम् । लसदिति ॥१५॥ तद्वीक्ष्येति । बहुशो दृष्टबले दोर्यानपात्रद्वये

तद्वीक्ष्यार्णवसन्निभं रिपुबलं हीरस्तितीर्षुर्बली
दृष्टी दृष्टबले न्यधत्त बहुशो दोर्यानपात्रद्वये[1] ।
यद्विस्तीर्णमपारमुन्नतमहाभूभृत्कुलैः सन्ततं
[2]यच्चासाध्यमभूद्विजेतुमनिशं डिल्लीशितुर्दुस्सहम् ॥ १६॥

समगच्छत भीमेन हूणानीकेन तत्क्षणम् ।
वेगेन प्रत्यनीकोऽथ सागरेणेव सागरः ॥ १७ ॥

यावद्भीषणसिंहनादमुखरैः नानाविधप्रोल्लस-
च्छस्त्रव्यापृतपाणिभिः स्थपुटितं नासीरमासीद्भटैः ।
तावन्नासरराट् क हीरनृपतिः क्वेति प्रगल्भोक्तिभिः
सेनारक्षिभिरेव तत्र हि रुषा युद्धाय बद्धा मतिः ॥१८॥

अनन्तरमनन्तोरगभोगायतबाहुविलसदनुपमजयश्रियः हुस-नद्धि-मुजुभर-मूशेलत्तोसु लासादयः सुमतयश्चभूपतयः चिरकाल-

---

1. M. पात्रद्वयः P. पत्रद्वय 2. M. यद्वा

संस्कर्तुष्टीका

स्वहस्तरूपनौकाद्वये । उन्नतमहाभूभृत्कुलैः ताद्दशपर्वतकुलैः ताद्दशराजकुलैः सन्ततं व्याप्तम् ॥ १६ ॥ समगच्छतेति ॥ १७ ॥ यावदिति । स्थपुटितमुच्चावचीकृतम् । नासीरं सेनामुखम् अनन्तोरगः शेषः । हसनद्धिः हसन् उद्दीन खान् । इतरे पूर्वमेवोक्ताः । अविचारं यथा तथा आधिकं भृताः कृतभरणाः ततश्चोपाचिताश्च, तद्भावस्तया । तदानृण्येति । तत्पोषणानृण्यमित्यर्थः । तत्संपादनावसरो युद्धरूपः । वैशसं युद्धे वधः । सैदुषरीपु सैयद् षरीफ खान् । 'नसरत' इत्ययं क इति न ज्ञायते । बोम्मराट् कार्वेटिनगरपतिः । कनकयाचमनायकश्च वेंकटगिरीश्वरः । एते नासरपक्षीयाः ।

[1]मविचारमधिकभूतोपचिततया प्रांशुसार्वभौमामात्यप्रवरेण विजयानन्दरङ्गेण तदानृण्यसंपादनावसर[2]लाभसमुन्मिषितमहोत्साहतया विमतसैन्यानीव तृणीकृत्य [3]निजजीवितानि, अवधूय वैशससाध्वसमतिशितकरोल्लसितनानाप्रहरणं प्रविश्य रणकर्कशमहावीरसैदुषरीपु-नसरत-बोम्मराट्-कनकयाचमनायक-मुखानेकानीकिनीशवशंवदैः स्रवन्मदैरावतसमोन्नतकल्पितवारणाधि[4]रूढनिषादिजातैरयुतैः तुरङ्गसादिभिः पदातिभिश्च निरन्तरीकृतं नासरसार्वभौमनासीरं, कासरानिव कुञ्जरान्, भषकानिव घोटकान्, परागकणानिव पत्तिगणान्, प्रसूनविहारमिव प्रहरणप्रहारम्, पिष्टातमुष्टिमिव कलम्बवृष्टिं च मन्यमानाः, हन्यमाना अपि हर्षोन्मिषिताट्टहासमुखरीकृतान्तरिक्षा हर्यक्षा इव वातायुव्रातेषु, अण्डजाधिपा इव कुण्डलिमण्डलेषु, सामजतल्लजा इव अंशुमत्फलाटवीषु, दवधूमध्वजा इव जीर्णतृणध्वजगुल्मेषु, निःशङ्कमापत्य यवनेश्वरसैनिकेषु प्रासपट्टसपरश्वथकृपाणशक्तिमुसललाङ्गलक्षेपणीनलिकशतघ्नीभिः अरिकुलघ्नाः पातयन्तः केतुदण्डान्, पाटयन्तः करटिघोटकपादातानि तानि तानि, प्रवर्तयन्तो रक्तस्रोतस्विनी-

---

1. M. corrupt here
2. P. omits लाभ
3. M. omits निज
4. M. वारणरूढ

---

संस्कर्तुष्टीका

कासरा महिषाः । भषकाः कुक्कुराः । पिष्टातः पटवासकः । कलम्बा बाणाः । वातायुव्रातेषु हरिणसमूहेषु । अण्डजाधिपो गरुडः । कुण्डली सर्पः । सामजा गजाः । अंशुमत्फला कदली । दवधूमध्वजा

रपरिमिताः, सन्तर्पयन्तश्च कङ्ककाकसालावृकगोमायुकटपूतनादीन्, अतृप्यन्तश्च बृन्दं बृन्दं निपात्यापि, सर्वामपि प्रतिवाहिनीं क्षणेन व्याकुलीचक्रुः ॥

इत्थं नासररङ्गेन्द्रशासनात् सैन्ययोर्द्वयोः ।
आमध्याह्नमभूद् युद्धमद्भुतं भीरुभीषणम् ॥ १९ ॥

दृष्ट्वा तन्मथितद्विपोष्ट्रतुरगं नृत्यत्कबन्धोत्करं
भल्लाकृष्टविनिस्सृतान्त्रपदगं सैन्यं विविग्नो भृशम् ।
सन्धिं कर्तुमियेष नासरपती रङ्गेण रङ्गेऽन्यथा
सर्वं मंक्षु बलं यशश्च विमलं नूनं विनश्येदिति ॥२०॥

तदनु सहनवासं वीक्ष्य पार्श्वे वसन्तं
प्रभुरयमिदमूचे सैन्यपं दैन्ययुक्तम् ।
प्रतिभटकरिसिंहोऽप्युद्विजन् हूणयोध-
प्रबलशरभसंघादापदं [1]शङ्कमानः ॥ २१ ॥

---

1. P. मन्यमानः

---

संस्कृतटीका

दावाग्नयः । तृणध्वजा वेणवः । यवनेश्वरो नासरः । प्रासादय आयुधविशेषाः । स्रोतस्विनी नदी । कङ्काः पक्षिविशेषाः । सालावृका वृकविशेषाः । गोमायवः शृगालाः । कटपूतनाः पिशाचविशेषाः ॥ इत्थमिति ॥ १९ ॥ दृष्ट्वेति । भल्लाः शराः । पदगाः पदातयः । विविग्नो व्याकुलः । रङ्गे युद्धरङ्गे । मङ्क्षु सद्यः ॥ २० ॥ तदान्विति । सैन्यपं सेनापतिम् । उद्विजन् बिभ्यत् । शरभो नाम सिंहद्विण्मृगाविशेषः ॥ २१ ॥

भो भोस्सैन्यपते सदाहितनतैर्हूणैर्विरोधः परं
स्थाने प्रांशुबलैः समीककुशलैर्धृष्टात्मभिर्मादृशः ।
अज्ञानेन कृतोद्यमं च धिगमुं जाल्मं विजेतुं परान्
येनैतद् बलमर्पितं स्वमखिलं हूणोग्रदावानले ॥ २२ ॥

इत्युदीर्य [1]धुतधैर्यममुष्मिन् नासरे विजयरङ्गनृपाय ।
मन्त्रिभिः सहनवासपुरोगैः पत्रिकां लिखति सन्धिकृताशे* ॥२३॥

बलैः कैश्चिद्युतस्तत्र वीरो हीरनृकेसरी ।
युयुधे क्वचन प्रोद्यद्धेतिभिः प्रतिसैनिकैः ॥ २४ ॥

1. M. धृत.

को. टि.

* M. सति सप्तमी ।

संस्कर्तुष्टीका

भो भो इति नासरो रभसकारिणम् आत्मानमेव गर्हयति । सदा हिताश्च नताश्च ते, तैः प्रांशुबलैः उन्नतबलैः समीककुशलैः धृष्टात्मभिः हूणैः प्रांशुहूणैः मादृशो मादृशस्य विरोधः परं स्थाने, स्नाने किं, किं समुचितमिति प्रश्नकाकुः । परान् उत्कृष्टान् शत्रून् हूणहीरादीन् जेतुम् अज्ञानेन कृतोद्यमम् आत्तप्रयत्नं जाल्मम् असमीक्ष्यकारिणम् । 'जाल्मस्तु पामरे । असमीक्ष्य-कारिणि च' इति हेमचन्द्रः । जाल्मं मां धिक् । येन मया हूणोग्रदावानले एतत् स्वमखिलं बलमर्पितम् ॥ २२ ॥ इत्युदीर्येति । धुतधैर्यं निरस्तधैर्यं यथा तथा । सन्धिकृताशे सन्धये कृता धृता आशा येन सः तस्मिन् ॥२३॥ बलैरिति । रणरङ्गात् प्रांशुबलैः अपक्रान्तम् ;ताननु चन्द्रेणाप्यपक्रान्तम् ; हीरस्त्वेकः सह कतिपयैः बलैः रणरङ्गैकदेशे युध्यमानः सैन्दुलष्किर् नाम्ना जीवग्राहं गृहीतः ॥ २४ ॥

तत्रागत्यातिरोषात् कपटपथमथाश्रित्य दुष्टोऽस्य पूज्यः
प्राज्यानीकः समीके झटिति जडमतिः सैन्दुलष्किर्हि हीरम् ।
जीवग्राहं गृहीत्वा सचिववरयुतं नासरेन्द्रं त्वनैषीत्
तं तान्तस्वान्तमेतं स च मुदमभजत् प्रेक्ष्य शत्रुं नितान्तम् ॥२५॥

[1]संरुन्धद्भिस्सरुड्भिः कटकमखिलमानन्दरङ्गाज्ञयाप्तैः
प्राप्तैर्हूणैः प्रहृष्टैः प्रधनमिह भवेद् दारुणं संप्रतीति ।
संघे संघे जनानां नवनवमभवन् भिन्नभिन्नाः प्रवादाः
जीवग्राहं गृहीतो यदयमुरुयशाश्छद्मना नासरेण ॥ २६ ॥

किञ्च—
तस्मिन्ननेहसि शठः स्वयमेव सन्धिं कुर्वन्नितोपधिपरस्तु गृहीशत्रुः ।
आनन्दरङ्गनृपतेरतनोद्यदागस्तन्नासरोऽद्य न भवेदिति लोकवादः ॥

1. P. the first two lines of this verse are missing

संस्कर्तुष्टीका

तत्रागत्येति । अस्य नासरस्य पूज्यः पितुरासब्जाकालात् मन्त्रिपदमलंकुर्वन् । सैन्दुलष्किर् सैयद् लस्कर् खान् ॥ २५ ॥ संरुन्धद्भिरिति । प्रधनं युद्धम् । यदयमिति । अयं हीरः ॥ २६ ॥ तस्मिन्ननेहसीति नासरेण तन्मन्त्रिभिश्च हीरचन्द्रहूणपक्षे भेदसंपादनाय प्रयुक्तस्य मन्त्रनयस्य परामर्शः । शठ इति नासरपरामर्शः । उपधिपरः छद्मपरः । हीराय स्वकीयम् अदोनीप्रदेशं चन्द्राय आर्काटिकां च ददामीति लेखैः प्रत्ययमुत्पाद्य पश्चात् हीरः जीवग्राहं गृहीतः । आगः अपराधः । एवं छद्मवृत्तो नासरो न भवेद् नङ्क्ष्यतीति लोके जनानां वादः ॥ २६ ॥

तस्मिन्ननवधानेन हीरे वैरिवशंगते ।
चन्द्राद्याः पृतनाध्यक्षास्त्रस्ता नव्यपुरं ययुः ॥ २७ ॥

अथाकर्ण्य चन्द्रोक्तमानन्दरङ्गः प्रमत्तं गृहीतं स हीरं सुरुष्टः ।
सभायामरातेः शिरस्तस्य शीघ्रं हरिष्ये युधीति प्रतिज्ञामकार्षीत् ॥

अथ[1] तदैव तथाविधमतर्कितमवेक्ष्य जगच्चक्षुष इव केतुतः कैतवपराच्छात्रवाद् उरुतेजसः सख्युर्व्यसनम् अतिदुःसहतरं विमततमस्ततिवीरुन्मूलोन्मूलनहेतुभूतप्रभूतमन्तु(यु ?)वीतिहोत्रपरीतेन, विपरीतमेव व्यसनवागुरया चिकीर्षता मृगयूथमिव प्रहर्तुमरातिसार्थम्, निराकुर्वता च निःसारं तृणमिवानभिमतं विमतवाचिकम्, शरणागतमनुजानन्दनेन तिरुवेङ्कटनन्दनेन [2]पङ्क्तिरथनन्दनेनेव वलीमुखकुलमखिलं हूणबलमतिविमलशिततर-

1. M. omits अथ. 2. P. omits this word.

संस्कर्तुष्टीका

जगच्चक्षुषः सूर्यस्य । केतुतः केतुग्रहात् । शात्रवात् शत्रोः । विमताः शत्रव एव तमस्ततयः तमस्समूहा ता एव वीरुधो लताः तन्मूलोन्मूलनहेतुभूतो मन्युः क्रोध एव वीतिहोत्रः वह्निः तत्परीतेन । व्यसनवागुरया दुःखरूपजालेन मृगयूथमिव अरातिसार्थं प्रहर्तुं विपरीतमेव चिकीर्षता । प्रहरणाय विपरीतं कार्यं प्रतिविधानरूपं कर्तुमिच्छता । विमतवाचिकं नासरप्रेषितं सोपधिकं लेखरूपं सन्देशम् । पङ्क्तिरथेति । रामेणेव ।

नानाप्रहरणमचिरेणं सर्वाभिसारेण स रिपुः शास्यतामिति स्वनि[1]-ग्रहाय सरभसमादिष्टं प्रस्थितं च निशाम्य प्रतिज्ञामपि निशम्य हूणपतेः अरुन्तुदां, सहस्तोऽपि विहस्तः समस्तामपि वरूथिनीं प्रकर्षन् [2]निखिलैरपि सचिवै[3]रशुभशंकिभिरह्नाय कृतान्तनिह्नुतमतिः आसब्जात्मजः यवनाधिपतिः[4] आर्काटिकामाससाद ॥

अभिनवनगरीतो हूणराजन्ययोधाः
हरय इव दरीतो निःसृतास्ते नदन्तः ।
उपचितशितनानाहेतिदंष्ट्राः प्रभिन्न-
प्रतिभटगजयूथान्यञ्जसा ध्वंसयन्तः ॥ २९ ॥

अत्रान्तरे—

अनवर्द्धिसुतो नाम महम्मदिति वीर्यवान् ।
आगाद्वैरमनुस्मृत्य योद्धुमेतैर्नृपाज्ञया ॥ ३० ॥

---

1. P. निग्रहणाय 2. P. अखिलः
3. M. शुभ- 4. P. अधिभूः

---

संस्कर्तुष्टीका

सर्वाभिसारेण सर्वाभियोगेन सर्वानुयात्रेण सह वा । स्वनिग्रहाय नासरनिग्रहाय । निशाम्य दृष्ट्वा । निशम्य श्रुत्वा । अरुंतुदा मर्मभेदिनीम् । कृतान्तेन कालेन निह्नुता पिहिता मतिः यस्य सः । आसब्जात्मजः नासरः । बन्दीकृतेन हीरेण साकं नासरः आर्काटिकां प्रतस्थे ॥ अभिनवेति । प्रांशुहूणसेना आर्काटिकां प्रस्थितं नासरमनुद्रुता ॥ २९ ॥

त्रिंशत्सादिसहस्रयुङ्नलिकभृत्पादातगुप्तोऽपि स-
न्मित्रं पाटलपत्तनाधिपमथ प्राप्यापि हूणेश्वरम् ।
[1]भग्नः संयति दुर्मदैः प्रतिभटैः पुत्रोऽनवर्द्धैस्तदा
[2]सत्रासं तरसा त्रपानतमुखः प्राप प्रभोरन्तिकम् ॥३१॥

तत्तद्देशेष्वमी स्वान् अधिकबलयुतान् निक्षिपन्तः परेषां
विद्राव्य त्यक्तहेतीन् झटिति भटगणान् स्था(यु)कांश्चाक्षिपन्तः ।
हृष्टा हूणेन्द्रयोधाः कृतमतिविजयानन्दरङ्गेन्द्रशिष्टा-
श्रेणीं तां प्रापुरेजत्प्रतिभटभरितां योद्धुकामाः समेताः ॥३२॥

1. M. gap here. .2 M. संत्रासम्

संस्कर्तुष्टीका

अनवार्द्धैः अन्वार् उद्दीन् खान् आमूरु-युद्धे हतः आर्काटिकापतिः । तत्सुतो मुहम्मद् अलि नामकः । नासराज्ञया आङ्ग्लेयसाहाय्येन स प्रांशुहूण-बलं तिरुविटिनामकप्रदेशे न्यरुणत् । वैरमनुस्मृत्य स्वपितृहत्तिरूपं वैरम् । एतैः नासरमनुद्रुतैः प्रांशुहूणैः । नृपाज्ञया नासराज्ञया ॥३०॥ त्रिंशदिति । सादिनाम् अश्वयोधानां त्रिंशत्सहस्रेण । पाटलपत्तनं तिरुप्पादिरिप्पुलियूर् कडलूर् इति च ख्यातम् । तदधिपं तत्रत्य - सैण्ट् डेविड्नामक - आङ्ग्लेयदुर्गाधिपं फ्लायर् (Floyer) नामकम् । प्राप्यापि । तेन कोप् नामकः सेनापतिः ससैन्यः प्रेषितः । भग्नः न केवलं जितः किन्तु वस्तुतः भग्नैक-पादश्च । प्रभोः नासरस्य ॥ ३१ ॥ तत्तद्देशेष्विति । स्थायुकान् ग्रामाधि-कृतान् । स्थायुकः एकग्रामाधिकृतः । एजन्तः भिया कम्पमानाः प्रतिभटाः तैर्भरिताम् ॥३२॥ विधुतेति । कूलं सैन्यपृष्ठम् । 'कूलं तटे सैन्यपृष्ठे' इति हेमचन्द्रः । तादृशं सालं प्राकारम् । मुजुभरः मुझफ़र् खान् ।

[1]विधुतविमतकूलं सालमाक्रम्य चेञ्जयाः
प्रथितमुजुभराद्यो हूणसार्थो बलाढ्यः ।
निहितसितपताकः प्रोन्नताट्टालकेषु
[2]न्यधित पदमभीकः [3]शात्रवान् जेतुकामः ॥ ३३ ॥

परीभूतं प्रेक्ष्य प्रहितमथ तं योधनकृते
परीतः कोपेन प्रतिहतमतिर्नासरपतिः ।
हितामात्यैरुक्तामपि गिरमशृण्वन् स बहुशः
प्रतस्थेऽनर्थाय स्वयमपि च भिन्नः खलजनैः ॥ ३४ ॥

प्रतिष्ठमान उत्थितान्यनिष्टकष्टसूचका-
न्युरुकुधां परीतहृद्व्यपास्तधीः प्रबाधितुम् ।

1. M. विरत 2. M. व्यधित
3. M. corrupt here.

संस्कर्तुष्टीका

परीभूतमिति । तम् अनवर्द्दिसुतं मुहम्मद् आलि नामकम् । स्वयमपि च भिन्नः खलजनैरिति । स्वसेनायामेव वर्तमानैः स्वविरुद्धैः प्रांशुहूणैस्साकं रहः भेदजापं कुर्वद्भिः ॥ ३४ ॥ प्रतिष्ठमान इति । उत्थितानि अनिष्टकष्टसूचकानि निमित्तकानि अचिन्तयन् उरुकुधा परीत-हृत् व्यपास्तधीः स नासरः जगत् प्रबाधितुं प्रतिष्ठमानः आसीत् । महाबलेरितः महासत्त्वप्रेरितैः घनैः निबिडैः बलैः सैन्यैः सह । युगान्तवत् प्रलय इव महाबलेरितैः वायुप्रेरितैः 'महाबलो बलीयसि, वायौ' इति हेमचन्द्रः ॥ ३५ ॥ असदादीति । असद्मीर् असद्नामकश्चेत्तुप्पट्टुस्थः

अचिन्तयन् निमित्तकान्यनुद्रुतो घनैर्बलै-
र्युगान्तवत् स नासरो जगन्महाबलेरितैः ॥ ३५ ॥

तदनु नियतिबलपरिमुषितनिजमतितया केवलम् [1]असदादिखलयवनजना[2]जसतया च सर्वथा प्रतिभटसैन्यगहनविपिन-[3]वर्धनशितधार[4]कठोरकुठारेण[5]शठेतरप्रणतमनुजमन्दारेण वेत्रपुटभेद-नाधीश्वरतिरुवेङ्कटभूपालतनुजेन विजयानन्दरङ्गेण बलवता सह वैरमसाम्प्रतं साम्प्रतम्, अस्मै प्रतिपाद्य भागिनेयाय राज्यं, प्राज्यश्रियं[6] तं च समाधाय सहूणेशम्, अक्षतबलाः सर्वेऽपि वयं सुखीभवाम, पश्याम पुत्रसुहृत्कलत्राणि, जीवाम च कञ्चन समयमिति वदतोऽपि हितोक्तिं निराकुर्वन्, उपेक्षमाणश्च गच्छतः कांश्चित् सुहृदः सबलान्, अतिबलैः अनुकूलमुत्प्रेक्षितात्मविपत्तिभिरपि तत्तादृशचिरकृतप्रेमवश्यतया विसृज्य गन्तुमक्षमैः सामन्तक्ष्मेश-सहस्रैर्भर्तृभक्त्या भृत्या च नियन्त्रितैः अतन्द्रितैरनुगतः सहनवासपृतनाधीशपुरःसरयवनामात्यशतैर्मन्त्रिणा च स्वनि-

1. M. सदादि. The word 'Asad' here is the name of a Muhammedan.

2. M. आज्ञसतया 3. M. वर्धा

4. M. gap here. 5. M. corrupt here. 6. M. श्रिया

संस्कर्तुष्टीका

अन्यो वा यवनपतिः । तदादयः खलयवनजनाः तैः आजसतया । वर्धनं छेदनम् । भागिनेयाय नासरभगिनीपुत्राय हीराय । तं च आनन्दरङ्गं च । क्ष्मेशाः भूपाः । भृत्या पोषणेन ।

यन्त्रणाक्षमेण मोरोपण्डितेन युतः सैन्येन वृतः, कबलयन्निव हूणबलं पराक्रमणेर्ष्यया सर्वामपि सीमां ध्वंसयन्, त्रासयन्निव मृगयुः मृगयूथमखिलं प्राणिजालमशरणमकरुणसैनिकसौनिकनिकरोपाहृत-निरन्तरहन्यमानबहुलकुटुम्बिबहुलतया सर्वतः सर्वस्वलुण्टाक-वराक[1]निर्दयोच्छृङ्खलमराटखलिनीकरालकरवालनिबर्हितबहुविध-बाडबतया च प्रक्षीणायुः अहंयुः कृतान्तबलचोदितः सन्दानितस्तदीयदामभिः, बहुभीमानिरवधिकानीककोलाहलबधिरी-कृताशेषदिगन्तरः स नासरकेसरी प्रबलबहुलहूणयोधशरभराजि-भरितागिरिदर्याः चेञ्जीनगर्या गव्यूतिद्वयमात्रे क्वचन प्रदेशे निवेशयामास निखिलमनीकजालम् ॥

प्राप्तं नासरसैन्यमुद्यतमथो युद्धाय बद्धस्पृहं
श्रुत्वा प्रेषितदण्डचक्रनिचयः तन्निग्रहं चण्डधीः ।
कर्तुं हूणपतेरनीकमखिलं [2]स प्राहिणोत्सत्वरं
भूयो जित्वरमुद्यतासि धृतिमान् आनन्दरङ्गप्रभुः ॥३६॥

तदनु हूणबलं सुमहज्जवात् स्फुरितहेतिगणोल्बणभीषणम् ।
प्रचलदूर्मिपयोनिधिसन्निभं प्रतिययावरिसैन्यजिघांसया ॥ ३७ ॥

1. M. gap here. 2. P. संप्राहिणोत्

संस्कर्तुष्टीका

सहनवासः षा नवास् खान् । स्वानियन्त्रणाक्षमेण नासरानिवारणा-क्षमेण । मृगयुः व्याधः । सौनिकाः पशुमारकाः । वराका नीचाः । खलिनी खलसंहतिः । करवालाः असयः । बाडबं बडबानां समूहः । अहंयुः अहंकारी । सन्दानितः बद्धः । तदीयदामभिः कृतान्तपाशैः ।

[1]न्यरौत्सुरुद्भटा योधा प्रांशुहूणमहीपतेः ।
क्षणेन प्रत्यनीकानि निविष्टानि समन्ततः ॥ ३८ ॥

रुद्धानि तस्य परितः कृतहस्तहूणैः
प्राणातिगोग्रनलिकावलिभी रणोत्कैः ।
उद्विग्नहृन्दि गलहस्तितधीरतानि
सैन्यानि नासरपतेरभवन् क्षणेन ॥ ३९ ॥

तत्क्षणं च तदवेक्ष्य रणोत्सुकं हूणबलम् उरुतरबलं परितः स्थितम् अतिकुपितस्य चलितधियः पुरतो विधाय परनिरासपरं सहनवासाभिधं पृतनाधिनाथं करतलोल्लासितकरवालं गद्वालं च पार्श्वयोश्च प्रभञ्जनपावकोपमौ हिंमद्बहृदराब्दल्लाभिधानौ ससेनौ यवनौ पश्चाच्च जानोजि-चन्द्रसेन-पुरस्सरान् मराटेश्वरान् स्वयमप्यरिमदवारणं मदवारणमारूढस्य अत्यारूढतेजसः निजामात्मजस्य नासरस्य शासनेन सरभसमतिक्रोधाः योधाः समाबध्य वर्माणि [2]दुर्मानिनः समधिरुह्य तुरङ्गानुरुजवानतितुङ्गान् मतङ्गजानपि कल्पि-

1. M. corrupt here. 2. M. letters missing here.

संस्कर्तुष्टीका

प्राप्तमिति । उद्यतासि उत्क्षिप्तखड्गमनीकमिति संबन्धः ॥ ३६ ॥ तदन्विति । प्रतिययौ नासर इति शेषः ॥ ३७ ॥

रुद्धानीति । कृतहस्ताः सम्यगभ्यस्तशस्त्रा हूणाः तैः । प्राणानतिगच्छान्ति आदाय शरीरं भित्त्वा निर्यान्तीति प्राणातिगाः ताहश उग्रा नालिका अग्निगोलकमुचः, तदावलयः पङ्क्तयो यषां ते, तैः । उद्विग्नहृन्दि त्रस्त-

[1]तानल्पकलम्बकदम्बपूर्णनिषङ्गकृतानुषङ्गा निटिलतटघटित-कुटिलभ्रुकुटीविभङ्गाः[2] कलितवीरपाणाः शितकृपाणाः परमाश्रुत[3]-संशप्तकव्रताः,[4] सुतरामापूरयन्तः प्राज्यैर्ज्याघोषैः ककुभो, भिन्दन्तः भीरुजन[5]हृदयान् अट्टहासैः, पातयन्तः शस्त्रैः सशिरस्त्राणि शिरांसि प्रतिभटानाम्, करटिघोटकान् परिघाघातैः, संवर्तमारुतावर्तित-सागरमिव हूणबलमाक्रम्य नासीरनिविष्टं मुजुभरनामानं पृतना-धीशं कीनाशमिव विनाशयन्तम् अशेषमरिसैन्यं विधाय कृतारुषं सरोषमादाय च जीवग्राहम्, उद्रवान् विद्राव्य तदीयान् उदग्रं जयमापेदिरे ॥

तदाकर्ण्य स रङ्गेन्द्रः क्रुद्धः संवर्तकालवत् ।
इयेष तरसा शत्रून् हन्तुं हूणबलैर्घनैः ॥ ४० ॥

1. M. corrupt here
2. M. विभागाः
3. P. आश्रित
4. M. व्राताः
5. M. corrupt here.

संस्कर्तुष्टीका

हृदयानि । गलहस्तिता बहिष्कृता धीरता येषां तानि ॥ ३९ ॥ सहनवा-सादयो वर्णितचराः । अरिमदवारणं शत्रुमदहर्तारम् ।

वर्माणि कवचानि । कल्पितेति । कलम्बाः शराः । निषङ्गाः तूणाः । वीरपाणम् उत्साहकरं मदिरादिपानम् । आश्रुतं प्रतिज्ञातं संशप्तकं संग्रामादनिवर्तनरूपं व्रतं यैस्ते आश्रुतसंशप्तकव्रताः । 'संशप्तकास्तु समयात् संग्रामादनिवर्तिन' इत्यमरः । नासीरनिविष्टं सेनामुखस्थितम् ।

अत्रान्तरे—

साहाय्यं सहजाय रङ्गपतये जिष्णोश्चिकीर्षोर्मुहुः
[1]शिष्टया शिक्षितुमुद्यतैररिबलं प्रध्वस्तगोबाडबम् ।
अभ्रैः प्रादुरभूददभ्रनिनदैराच्छाद्य सर्वा दिशः
कालः काल इवोग्र[2]हेतिचपलैः भृत्यैरुदीर्णाशुगैः ॥४१॥

निरन्तरघनाघनप्रबलवृष्टिपाताहत-
द्विपोष्ट्रवृषवीति[3]पत्तिजनमुक्तदूष्यव्रजम् ।
निरुद्धबहुलायति च्युतधृति प्रभग्नाशयं
बभूव तरसा बलं विमतनासरक्ष्मापतेः ॥ ४२ ॥

1. P. शिष्या 2. M. सति
3 M. वर्ति

संस्कर्तुष्टीका

कीनाशमिव यममिव । कृतारुषम् अरुर्व्रणम्, व्रणितं विधाय । उद्रवान् उद्गतरवान् । तदाकर्ण्येति । संवर्तकालवत् प्रलयकालवत् ॥ ४० ॥ साहाय्यमिति सहजाय आनन्दरङ्गस्य कृष्णवतारत्वस्य इष्टत्वात्, अव तारान्तरे च कृष्णस्यैव इन्द्रावरजोपेन्द्ररूपत्वात् सहोदरत्वम् । जिष्णोः इन्द्रस्य । मुहुः साहाय्यं चिकीर्षोः । शिष्टया आज्ञया । अखिलं रङ्गेन्द्रा-रिबलं शिक्षितुमुद्यतैः अभ्रैः भृत्यैः । कालः वर्षाकालः । काल इव अन्तक इव । उग्रा हेतय आयुधानि इव चपला विद्युतः येषां तैः अभ्रैः । उदीर्णाशुगैः उदीर्णा आशुगा बाणा इव आशुगाः वायवः यैः ते तैरभ्रैः । भृत्यैः सहायभूतैः सह कालः प्रादुरभूत् ॥ ४१ ॥ निरन्तरेति । घनाघनो वर्षुकाम्बुदः । वीतिः अश्वः । 'वीतिरश्वेऽशने गतौ' इति हेमचन्द्रः । दूष्यं पटमण्डपम् । पदातिजनत्यक्तपटीगेहसमूहम् ।

[1]किञ्च—

जिष्णोर्वासवदूतेन साह्यमस्य चिकीर्षता ।
अकस्मादुत्थितमिव प्रत्यर्थिपृतनान्तरे ॥ ४३ ॥

स च पुनः तदत्याहितमरिभटाहितम् अत्यर्थमसहमान इव विजयानन्दरङ्गसैन्यस्य जन्याजिरागतदैन्यस्य समन्युरिव शतमन्युदूतः शत्रुसैन्येषु [2]स्यदेन दुर्मदेषु सञ्चरन् सव्यापसव्यमण्डलानि, अतिलाघवोदस्तसमस्तविटपिपटलः अतिवेलमदभ्रबंभ्रम्यमाणपाषाणशकलजालककलितात्युग्रोदग्रविकटनटनः सरभसोत्थितपरागमेदुरितयवसपलाशजालकमीलितभ्रमितकङ्ककरटबकोटप्रमुखानेकपत्त्ररथसंहतिः अतिविकटविशंकटकपर्दिकपर्दनिष्पतन्निर्जरसारिन्निर्झरझलझलारावभयंकरझांकारमुखरीकृतपुष्करान्तरः, समाश्रित्य युगविगमानुरूपं रूपम्, आपतन् विघूर्णयन् जीर्णतृणपर्णानीव अतिब-

1. P. omits किञ्च 2. M. corrupt here.

संस्कर्तुष्टीका

निरुद्धा बहुला आयतिः प्रभावः यस्य तत् । 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः ॥ ४२ ॥ जिष्णोरिति । वासवदूतेन मेघेन । जिष्णोर्जयशीलस्य अस्य आनन्दरङ्गेन्द्रस्य । पृतना सैन्यम् ॥ ४३ ॥ स च पुनरिति । स शतमन्युदूतः इन्द्रदूतः स मेघः । अरिभटैराहितं तत् अत्याहितं मरणान्तकं कर्म । विजयानन्दरङ्गसैन्यस्य आहितं तादृशं कर्म असहमान इवेति संम्बन्धः । जन्याजिरे रणभूमौ आगतदैन्यस्य । स्यदेन वेगेन । अतिलाघवेत्यारभ्य घनाघनवर्षप्रक्रमवर्णनम् । वायुना समुन्मूलितवृक्षपटलः । समुद्धूतशिलाशकलनिकरः । उत्थितपांसुतृणपत्रसमूहसंवृतभ्रामितकङ्कादिपक्षिसमूहः ।

लान्यपि गन्धर्वकुलानि, अवचूर्णयन् शताङ्गवृन्दमारण्यकमिव तरुनिकुरुंबम्, क्षितितलाद् उत्क्षिपन् प्रस्तरखण्डानिव स्तम्बेरमस्तोमान्, उन्मूलयन् पटगृहपटलानि उत्पाटयन् केतुदण्डानुत्सारयन् उष्ट्रजातानि निपातयन् पादातान्यवसादयन् औक्षकाण्युद्वेजयन् ध्वजिनीशान्, [1]अखिलामपि वाहिनीमेवं क्षणेन क्षोभयामास ॥

अपिच—

दुर्वारान् हूणयोधान् ज्वलदनलनिभान्भीमवातूलभग्ना-
न्युद्विग्नाः प्रेक्ष्य सैन्यान्यपि गुरुविजयानन्दरङ्गेन्द्रशक्तिम् ।
दुर्वृत्तं स्वामिनं स्वं विधुतहितमतिं त्राणकामाः समेताः
प्राप्तुं श्रेयस्ततस्ते झटिति कृतधियोऽमन्त्रयन् मन्त्रिवर्गाः ॥४४

इत्थमुद्धताप्रतिक्रियदिष्टपरिभूतातिकोपनबालिशानाश्रवस्वाभितया मुहुर्मुहुः अरुन्तुदतदीयवचनविरसीकृतनिजस्वान्ततया

1. M. अखिलान्

संस्कर्तुष्टीका

बकोटः बकः । पत्ररथाः पक्षिणः । विशंकटो विशालः । कपर्दी शिवः । कपर्दस्तस्य जूटाजटः । निर्जरसरित् गङ्गा । मुखरीकृतपुष्करान्तरः मुखरीकृतव्योममध्यः । युगविगमो युगान्तः प्रलयः । गन्धर्वकुलानि अश्वकुलानि । प्रस्तरखण्डान् ग्रावखण्डान् । स्तम्बेरमा गजाः । औक्षकाणि वृषभसमूहान् । ध्वजिनीशान् सेनानायकान् ।

च[1] विरचितौदास्येषु [2]भग्नमानेषु [3]विविग्नेषु केवलं जिजीविषया प्रार्थितकृपालुविजयानन्दरङ्गेन्द्रसख्येषु परामात्येषु अघटितघटना-पटीयसा महौजसा ज्यायसा तिरुवेङ्कटनृपतेः नन्दनेन सर्वेष्वपि तृतीयमुपायमुपायकुशलेन गमितेषु ॥

अथ तरसादिकलापं हूणबलं धृष्टभीमसादिकलापम् ।
न्यरुणद्भूयस्सेनां योद्धुमरातेस्तदैव भूयः सेनाम् ॥ ४५ ॥

अथोषसि धृतासिभिस्तुरगसादिभिः सत्वरं
विजित्वरपदातिभिर्नलिककीलिदग्धारिभिः ।
परःशतपतच्छिरःप्रकरदन्तुरक्ष्माजिरं
प्रभग्नमभवत्क्षणाद्रिपुबलं बलाद्धूणकैः ॥ ४६ ॥

1. M. corrupt here.
2. M. भुग्न P. अभुग्न
3. P. omits this word.

संस्कर्तुष्टीका

दुर्वारानिति नासरपक्षे भर्तृद्रोहं वर्णयति । भीमवातूलभग्नानि वातूलो महावातः । 'वातूलः पुंसि वात्यायाम्' इत्यमरः । सैन्यानि स्वसैन्यानि । स्वामिनं स्वं नासरम् । विधुतहितमतिम् अस्वीकृतहितामात्योपदेशम् । त्राणकामाः आत्मत्राणकामाः ॥ ४४ ॥ इत्थमिति । उद्धतेति नासर-दोषवर्णनम् । दिष्टं मेघरूपम् अथ दैवसामान्यरूपं वा । अनाश्रवः अशुश्रूषुः । स्वामी नासरः । अरुन्तुदं मर्मभेदि । भग्नमानेषु खण्डितमानेषु । विविग्नेषु नितान्तं हृदि पीडितेषु सन्त्रस्तेषु च । जीवितुमिच्छा जिजीविषा । परामात्येषु शत्रुभूतनासरामात्येषु हिम्मद्बहदरादिषु । पटीयसा समर्थेन । तृतीयमुपायं भेदम् ।

अनन्तरमित्थमभिहन्यमानमभितः सहस्रशः समरसंमर्द-परिगृहीतविजयमपि अशिक्षितायुधग्रहमिव अश्रुतपृतनाकथमिव करटपटलमिव कपियूथमिव करतालिकामात्रकातरमवलोकयन् आत्मबलम् आलोचयन् दुःशकुनफलम्, 'अहो नियतेः प्राबल्यम्! समीकं नाम कियदिदम्? कियान्नाम हूणगणोऽसौ? अहह, कीदृशाः पलायन्ते, कीदृशाः पराक्रमन्ते! किमीदृशैः सचिवैः, किमीदृशैः बन्धुभिः [1]यद् ईदृशेऽपि व्यसने मादृशो जोषमासत' इति रोषदूषितान्तरात्मा, व्याहरन् परुषभाषणानि मान्यानपि सैन्य-पतीन्, अधिरूढशिलोच्चयोच्चतरकरटिमल्लः पुरश्चलन् मुहुर्मुहुः अधिक्षिप्तेन पल्लवितामर्षेण दुराधर्षेण निकटगतेन विकटगतिना विजयानन्दरङ्गेन्द्रोपजप्तेन हिंमद्वहदरनाम्ना यवनेन सुनिशित-हेतिनिकृत्तशिराः [2]स नासरः कासरवाहननगरनासीरमासादितो बभूव ॥

1. M. ये
2. P. adds कासरवत् सतामरसः

संस्कर्तुष्टीका

अथेति । तरसं मांसं 'पिशितं तरसं मांसम्' इत्यमरः । तदादिनः कलापाः बाणा यस्मिंस्तत् । धृष्टभीमाः सादिनः योधा अश्ववीरा वा तेषां कलापो यस्य तत् धृष्टभीमसादिकलापम् । तादृशं हूणबलं योद्धुं भूयः पुनश्च सेनाम् इनैर्नाथैस्सहिताम् अरातेः भूयस्सेनां महतीं सेनां तदैव न्यरुणत् ॥ ४५ ॥ अथोषसीति । नालिकानां कीलिः अग्निः, कीलो ज्वाला, तद्ग्धारिभिः ॥ ४६ ॥

विद्राणे ध्वजिनीगणे धुतधृतौ मोरेऽथ दूरं गते
सद्यो लोचनगोचरादपगते मीरे समीरोपमे ।
कल्पान्तव्यतिषक्तसर्वशरधिस्रोतःप्रसूतध्वनि-
स्फारः प्रादुरभूद्धि हूणनिवहे हर्षाट्टहासस्वनः ॥ ४७ ॥

धावत्कातरयोधयूथपदवीसंरोधकौतूहले-
प्रोद्यद्धेतिकघोरहूणपरिषद्वातूलतूलायिताः ।
ढक्काभांकरणैस्तु शत्रुजनताहृद्दारणैर्दारुणैः
संभ्रान्ताः प्रतिपेदिरे युधि निवृत्ताशा बलेशा दिशः ॥४८

विद्रुतस्खलितमूर्च्छितशस्तत्रस्तनिष्पतितभिन्नपदातः ।
दारिताश्वगजदन्तुरितोऽभूदार्तघोषमुखरो रणरङ्गः ॥ ४९ ॥

---

संस्कृतटीका

अनन्तरमिति । सहस्रश इति बहुवारलब्धजयमपि तदा अशिक्षितायुधग्रह-मिवेत्यादि । पृतना सेना । समीकं युद्धम् । मादृश ईदृशे व्यसन इत्यन्वयः । शिलोच्चयः पर्वतः । हिम्मदबहद्दूर्नाम्ना यवनेन कर्णूल्पतिना । कासरवाहनो यमः ॥ विद्राण इति । मोरे मोरोपण्डित इति ख्याते । मीरे मीर् दायम् अलि खान् - नामके । शरधिः समुद्रः । शरं जलम् ॥ ४७ ॥ धावदिति । वातूलः वात्या । बलेशाः नासरसेनापतयः दिशः प्रतिपेदिरे ॥ विद्रुतेति । शस्तो विशस्तः । दारिता भिन्नाः ॥ ४९ ॥ प्राणेति । जनंगमाश्चण्डालाः, ते रणाङ्गणमध्ये पलायितशत्रुत्यक्तमहार्घभूषा अन्विष्यन्ति । क्रोडो मध्यप्रदेशः । धनौघेति । विजयिनो हूणाश्च विजितानां धनानि अपहरन्ति । समरे तस्मिन् वीरे निजामात्मजे

प्राणत्राणपरायणारिसुभटत्यक्तोरुमूल्यस्फुरद्-
भूषान्वेषिजनंगमौघनिबिडक्रोडं निरस्तात्मनि ।
स्कन्धावारमभूत् क्षणेन समरे तस्मिन्निजामात्मजे
वीरे हन्त धनौघरत्नपटलीलुण्टाकहूणोत्करम् ॥ ५० ॥

तदनु कदनशस्तारातिरात्ताखिलश्रीः
[1]सदनुमतसुवृत्तः प्रांशुकोद्धूतकेतुः ।
निभृतनिखिललोकस्फीतकीर्तिर्विरेजे
मिहिर इव स हीरो धीररङ्गेन्द्रसाक्षात् ॥ ५१ ॥

अथ क्षितौ वीरजनाः समस्ताः कथा मुदेत्थं कथयांबभूवुः ।
आनन्दरङ्गाख्यमहीमहेन्द्र[2]प्रतापविस्तारयुताः प्रशस्ताः ॥ ५२ ॥

तत्तादृग्बलशत्रुसैन्यजलधौ प्रासोर्मिमालाकुले
सामन्तव्रजघोरयादसि परं मग्नोऽपि धीराग्रणीः ।
आस्थाय त्वरितं दृढां मतिमयीं नावं पुनर्हीरराट्
उत्तीर्णास्तिरुवेङ्कटेन्द्रतनयस्यानन्दरङ्गप्रभोः ॥ ५३ ॥

---

1. M. सदनुगत 2. M. प्रस्ताप

---

संस्कृतटीका

निरस्तात्मनि मारिते सति स्कन्धावारं क्षणेनैवमभूत् ॥ ५० ॥ तदन्विति । कदनं युद्धम् । प्रांशुकोद्धूतकेतुः उच्चैरुद्धूतध्वजः प्राशुकैः प्रांशुहूणै-रुद्धूतध्वजश्च । मिहिरः सूर्यः ॥ ५१ ॥ ५२ ॥ तत्तादृगिति । प्रासाः आयुधविशेषाः । यादः जलजन्तुः । आनन्दरङ्गप्रभोर्मतिमयीं दृढां नावम् ॥ ५३ ॥

तत्तादृक्षमहम्मशाहुधरणीसुत्राममित्राग्रणीः
कुर्वन्नर्थवतीं प्रतिश्रुतगिरं हीरं परैर्वारितम् ।
चक्रे नक्रगृहीतदन्तिनमिवोपेन्द्रः सचक्रोऽवितं
रङ्गेन्द्रो भुवि सत्यसङ्गर इति प्राप्तश्च भूयः प्रथाम् ॥ ५४ ॥

यत्तातस्ततवाग्विभूतिरनयत्तातस्ततं वश्यतां
पश्यत्फालसदृङ्नृपालनिकरं डिल्लीश्वरानाश्रवः ।
यस्तातो निखिलस्य घातुकतया नासीत्परं नासरः
तं तातः शरणं निनाय मनुजेष्वानन्दरङ्गप्रभुः* ॥५५॥

को. टि.

* M. शरणं वधः । P. तातो दयनीयः । शरणं वधः । तातः दयातः ।

संस्कर्तुष्टीका

तत्तादृक्षेति । महम्मशाहुनामा डिल्लीश्वरः । प्रतिश्रुतगिरं हीराय ते विजयाय साहाय्यं करिष्यामीति प्रतिज्ञातां गिरम् अर्थवतीं सत्याम् । परैः शत्रुभिः नासरादिभिः वारितमुपरुद्धम् । उपेन्द्रो विष्णुः । सचक्रेण सुदर्शनेन साम्राज्याज्ञाचक्रेण च सहितः । अवितं रक्षितम् । सत्यसंगरः सत्यप्रतिज्ञः ॥ ५४॥ यत्तात इति । यत्तातः यस्य नासरस्य पिता पश्यत्फालसदृक् शिवसमानः ततवाग्विभूतिः विस्तृतवाङ्महिमा तातस्ततं नृपालनिकरं ततस्तत आगतं भूपालसमूहं वश्यतामनयत् । यो नासरजनकः आसब्जानामकः स्वयं परमेश्वरवत् दृष्टिविक्षेपमात्रेण निग्रहणशीलः स्ववाङ्नयेन वशीकृत-सकलसामन्तोऽभूत् । यश्च नासरः डिल्लीश्वरानाश्रवः महम्मद्शानामक-देहलीस्थमहाराजवचसि अवर्तमानः निखिलस्य हीरपित्रादिकस्य जनस्य घातुकतया नासीत्परं तातः नैव दयनीयोऽभूत् । ता दया । तं नासरं मनुजेषु सर्वेषु तातः दयातः आनन्दरङ्गप्रभुः शरणं वधं निनाय ॥५५॥ 'शरणं

तेजोऽपास्तमुदस्तभास्कररुचामाजावजय्यात्मनां
राज्ञां यस्य सहस्रमास्त सविधेऽजस्रं विधेयं स्वयम् ।
डिल्लीशोऽपि यतो बिभेति सततं सर्वक्षितीशार्चित-
स्तं धीरस्तृणवच्च हन्त तनुते स्मानन्दरङ्गो रिपुम् ॥ ५६

अथ तदानीमेव स मानी समानीतमहिमा विनीतभीत-समागतप्रणत[1]सामन्तनृपस्तोमपुरस्कृतस्वीकृतविविधोपहारजालो हीरिनृपालः कृपालुराघोषितास्कन्दनोपरमकाहलीको निजाभ्युदयोन्मीलदामोदमेदस्विभिः तेजस्विभिः स्वसचिवैः अकैतवैरर्चितः स्वामितामादधानः प्रेषितप्रधानपुरुषा[2]वेदितस्वपरिपन्थिनासरविलयोदन्तश्रवणजनितानन्दभरितान्तरङ्गेण विजयानन्दरङ्गेण सहूण-

1. M. gap here. 2. M. corrupt here.

संस्कर्तुष्टीका

[+-+ वधरक्षकयोरपि' इति हेमचन्द्रः ॥५५॥ तेज इति । उदस्तभास्कररुचां तिरस्कृतसूर्यतेजसाम् आजावजय्यात्मना समरे दुर्जयानां राज्ञां सहस्रं तेजोऽपास्तं यस्य तेजसा अपास्तं निरस्तं निर्जितं सत् यस्य डिल्लीश्वरस्य सविधे अजस्रं विधेयम् आस्त । तादृशः सर्वक्षितीशार्चितः डिल्लीशोऽपि यतो नासरात् बिभेति तं नासरं रिपुम् आनन्दरंगः तृणवत् तनुते स्म लघु निरस्यति स्म । हन्तेति आश्चर्ये ॥ ५६ ॥ अथेति । स हीरो मानी समानीतमहिमा पुनः प्रापितमहिमा । आस्कन्दनं रणः । काहली वाद्यविशेषः । आघोषितरणावसानवाद्यः । आमोदमेदस्विभिः आनन्दपूर्यमाणगात्रैः । सरभसेति । जयवार्ताश्रवणजनितानन्देन आनन्दरङ्गेण स्वानन्दसूचनाय सहस्रशतघ्नीसन्धुक्षणं समादिष्टमिति भावः । (Firing of canonshots) सहस्रचक्षुषेव इन्द्रेणेव । पनायितः स्तुतः ।

राजेन सरभससमादिष्टहूणभटसंधुक्षितशतघ्नीसहस्रेण सहस्रचक्षुषेव सकलबुधजनपनायितप्रभावजुषा निजालोकनौत्सुक्यमेदुरेण सत्यसङ्गरेण समाहूतस्तेन निरस्तेनमहाः ससेनः प्रत्युद्गतश्च पुरस्कृत्य सामन्तनृपमण्डलम् अखण्डमहीमण्डलमण्डनं समागत्य प्रत्यग्रपुटभेदनम् अत्युन्नतपताकम् अतिविस्तृतनिस्तुलपरिस्तोमस्तोमास्तीर्णं विस्तीर्णमर्णवकन्यकायतनमिव स्वलंकृतं मनोहरं हूणराजभवनमवजगाहे ॥

हीरक्षोणिपतेः समागमजुषः प्रेमोल्लसच्चेतसा
रङ्गेन्द्रेण तदादृतस्य बहुभिः सैन्यैस्ससैन्याधिपैः ।
हृष्टैः पुष्टबलैर्नवीननगरीसामन्तराजव्रजैः
रेजेऽदभ्रशरैः [1]शरासलसितैरुच्चैरिव द्यौर्घनैः * ॥५७॥

1. P. corrupt here.

को. टि.

* P. श्लिष्टम् ।

संस्कर्तुष्टीका

निरस्तेनमहाः निरस्तसूर्यतेजाः । परिस्तोमः कुथः । अर्णवकन्यकायतनं लक्ष्मीगृहम् ॥ हीरेति । प्रेमोल्लसच्चेतसा रङ्गेन्द्रेण समागमजुषः तदादृतस्य रङ्गेन्द्रादृतस्य हीरक्षोणिपतेः सैन्यैः नवीननगरी रेजे । केव ? द्यौः आकाशः घनैरिव । अदभ्रशरैः स्फीतबाणैः स्फीतजलैश्च शरासलसितैः शरासश्चापः, मेघपक्षे इन्द्रचाप इति विशेषणद्वयेऽपि श्लेषः ॥ ५७ ॥ स तत्रेति । हीरकुटुम्बम् आनन्दरङ्गरक्षितं सत् नूतनपुर्यामेव बभूव । पवित्र इत्यारभ्य इन्द्रेण श्लेषः । जिष्णुरिन्द्रो जयशीलो हीरश्च । विचित्रतर-

स तत्र वसतौ भृशं मुदितमानसैः संयुतः
कलत्रजननीसुतैर्विजयरङ्गभूपादृतैः ।
पवित्रसदगस्फुरत्कुसुमभूषितो यौवतै-
र्विचित्रतरविभ्रमैः सह रराज जिष्णुः सुखी* ॥ ५८ ॥

अरिजन्यघर्मतृषिता हीरमहीपालसैनिकचकोराः ।
अभवन्मुदितास्सुहिताः स्फुरदमृताद्रङ्गराजमण्डलतः[1] ॥५९

दृप्यद्वैरिभटप्रकाण्डक्रूरटिप्रोच्चण्डहर्यक्षतां[2]
प्राप्तस्यास्य[3] विपन्नरक्षणपटोरानन्दरङ्गप्रभोः ।
प्रेक्षन्ते स्म सविस्मयं क्षितिभृतः सर्वेऽपि खर्वेतरान्[4]
गाम्भीर्यस्थिर(तो[5])ल्लसद्वितरणप्रागल्भ्यमुख्यान् गुणान् ॥

1. M. except for the last foot, this verse is lost.
2. M. gap from here to-क्षण.
3. P. letter missing here.
4. M. gap from here to-ल्लसद्
5. P. letter missing here.

को. टि.

* P. श्लिष्टम् ।

संस्कर्तुष्टीका

विभ्रमैर्यौवतैः युवतीसमूहैः सह । पवित्राः सदगाः सद्वृक्षा देवतरवः तत्स्फुरत्कुसुमभूषितो देवेन्द्रः । हीरपक्षे पवित्रसदगः पावनशीलो भानुः । 'अगः स्यान्नगवत्तरौ । शैले सरीसृपे भानौ' इति हेमचन्द्रः । स इव स्फुरन् कुसुमभूषितश्च । कुसुमं फलं विजयरूपम् । 'कुसुमं++, फलपुष्पयोः' इति हेमचन्द्रः । 'पवित्रसदगस्फुरत्कुसुमभूषितैः' इति तु यदि पाठस्स्यात्, तदा सद्वृक्षपुष्पभूषितैरिति यौवतैरित्यस्य विशेषणतया

आनन्दरङ्गेन्द्रगुणोज्ज्वलानि हृद्यानि पद्यान्यवधारयन्तः ।
समागतास्तत्र समस्तभूपाः सुखेन रात्रिं हृषितास्तदोषुः ॥ ६१ ॥

खलयवनतमांसि प्रौढतेजःप्रकाशैः
निरसितु[1]मवतीर्णः श्रीहरी रङ्गभूपः ।
स्फुटमिति मतिमग्र्यामात्तहर्षो व्यतानीद्
अधिगतपरमार्थः साधुसार्थस्तदानीम् ॥ ६२ ॥

इति श्रीवत्सकुलतिलकायमान[2]गङ्गाधराध्वरिसुधाब्धिसुधाकरेण
श्रीपार्वतीगर्भसम्भवेन [3]श्रीनिवासकविना विरचिते
श्रीमदानन्दरङ्गविजये चम्पूकाव्ये
सप्तमः स्तबकः ॥

---

1. M. gap from here to -पः at the end. 2. P. तिलक
3. P. श्रीनिवासेन विरचिते

---

संस्कर्तुष्टीका

सुगमोऽर्थः ॥ ५८ ॥ अरिजन्येति । अरिजन्यं शत्रुणा युद्धम् । तदेव घर्मः तेन तृषिताः । सुहितास्तृप्ताः । स्फुरदमृतात् गुणमाधुर्यादानन्द-रङ्गेऽपि अमृतवत्त्वम् । रङ्गराजः आनन्दरङ्गराज एव राजा चन्द्रः तन्मण्डलतः ॥ 'मण्डलो बिम्बदेशयोः' । आनन्दरङ्गपक्षे परिवारविशिष्टः तत्सभामण्डलः, अन्यत्र चन्द्रबिम्बमिति योजना ॥ ५९ ॥ दृप्यदिति । करटिनो गजाः । हर्यक्षस्सिंहः । वैरिराजकेसरितां प्राप्तस्य । खर्वेतरान् उन्नतान् ॥ ६० ॥ खलेति । तेजः द्योतः प्रतापश्च ।

इत्यानन्दरङ्गविजयचम्पूकाव्ये संस्कर्तू राघवशर्मणष्टीकायां
सप्तमस्तबकटीका ॥

## ॥ अथाष्टमस्तबकः ॥

अनन्तरमपरेद्युः उपेत्य यथाकालमतिनिभृतैः प्रतिबोधितो वैतालिकैः अवलोक्य ससौख्यमचिरोपनतविजयलक्ष्मीकपोलतलमिव निर्मलमतिविशालमादर्शमण्डलम्, आखण्डलनीलमणिघटितरुचिर-कनककुण्डलमण्डिताननः पुण्डरीकदलायतनयनः परमभि-प्रणम्य प्रघणाभ्यर्णभुवमुपनीतामलंकृतां बहुलाम्, बहुलाभि-नवमणिरत्नपादुकाविलसन्मृदुपदकमलयुगलः प्रसन्नधीः [1]मन्दा-ञ्चितलीलागतिः सोल्लासमासाद्य निजविलासिनीजनविहारोचित-रमणीयकुसुमशयनीयलोभनीयनिकुञ्जसदनपुञ्जनिरन्तारितपर्यन्तप्र-देशामनिशमुरुतरनिबिडविविधतरुनिकरातिरोहितादिनकरकिरणजाल-तया प्राभातिकमृदुलवलन्मलयपवनावधूतनानाविधप्रसूनविगलद्वि-

1. P. मद-

संस्कृतटीका

अस्मिंश्चरमे स्तबके नेतुर्दिनचर्या, हूणपतिसभाया तस्य प्रवेशः, तत्रैव हीरागमनम्, हूणपतिना नेतुर्गुणश्लाघा हीरविजयस्य च आनन्दरङ्ग-चातुर्यमेव मूलमिति च कथनम्, हीरविजयमहोत्सवः, अदोनींप्रति हीरगमनम्, एतद्विजयवृत्तान्तश्रवणतुष्टेन डिल्लीश्वरेण आनन्दरङ्गहूणयोः सम्मानदानादि, प्रेषितस्य डिल्लीश्वरसम्मानस्य नूतनपुरे सोत्सवं प्रत्युद्गमनम्, हूणपतिना स्वस्मिन् न्यस्तसर्वभरेण आनन्दरङ्गेण राज्यनिर्वाह इत्यादिवर्णनपुरस्सरं ग्रन्थसमाप्तिः ॥ अनन्तरमिति । अतिनिभृतैः अतिविनीतैः । वैतालिकैः बन्दिभिः । प्रघणाभ्यर्णभुवं द्वारदेशमुपनीतामल-कृतां बहुलां धेनुम् अभिप्रणम्य ।

सारिपरागमेदुरतया च शीतल[1]सुरभिलसलिलां सुधांशुमण्डलावदातसुधालिप्तस्निग्धतरनेमिकां गृहोपवनवापिकां स्वस्वकार्यन्यापृतप्रश्रितससंभ्रमपरिजनैरञ्चलकलिताष्टापदरेखिकायां चतुरन्तपीठिकायाम् उपविष्टः प्रहृष्टः निर्वर्तिताभिषेकः परिगृहीतधवलमृदुलमहार्घवसनः प्रसाधितश्च विविधैराभरणैः हरिणाङ्कहरिणमद-[2]सांकववि (?) जवादिमिश्रेण पटीरद्रवेण परिचर्चितभुजान्तरः प्रकाममन्तरभिध्यायन् इन्दिरारमणचरणारविन्दं सानन्दं नन्दगोपान्वयकलशार्णवकलानिधिः उपेत्य भवनबहिर्द्वारं निरन्तरालपरिमिलदुदारमङ्गलाशीर्वचनमुखरधरणीगीर्वाणराजराजिसंकुलं बहुलसन्निधितया निधिपतिप्रहितमिव प्रीत्या समसमयसमुद्यदादित्यसहस्रभास्वरं कार्तस्वराञ्चिताञ्चललसमानवितानं चतुरन्तयानमधिरूढः प्रौढतरमधुरव्याहारमनोहरवेषबन्दिवृन्दपापठ्यमाननिजबिरुदावलिः सुललितेन उपरिधार्यमाणेन परितः स्फुरत्प्रविलम्बिमौक्तिकदाम-

---

1. M. omits सुरभिल
2. M. सांकवविमिश्रेण

---

संस्कर्तुष्टीका

सुधांश्विति। नेमिका कूपभित्तिः। अञ्चलः प्रान्तः। हरिणाङ्कः कर्पूरः। हरिणमदः कस्तूरी। 'सांकववि ?' इत्यत्र अशुद्धः पाठः। गन्धविशेषस्यात्र अभिप्रेतस्य नाम न ज्ञायते। जवादीति गन्धविशेषः प्रसिद्ध एव। पटीरद्रवः चन्दनरसः।

तया सर्वतोऽपि [1]भीषणामर्षणस्वर्भानुविषम[2]दशनदंशनारु[3]विवर-निष्यन्दिसुधारसासारोल्लसितरजनीकरबिम्बेनेव पृथुलेन पुण्डरीकेण चरितार्थयन् आलोककाखिललोकचक्षुष्मत्ताम् उन्नतमत्तपुरस्सर-दन्तावलकलितयशःपटहवादित्रः वेल्लपुटभेदनाधीश[4]तिरुवेङ्कटनृपति-नन्दनः चिरं मुहुर्मुहुः प्रतिपालितावसरप्रणमन्मौलिसामन्तनृपाल-वरिष्ठाधिष्ठितस्तम्बेरमम्[5], जङ्घाकारिकाविविधगतिनाटकघोटकसंघम-

1. M. विभीषण
2. M. दर्शन
3. M. P. वींवर
4. P. ईश्वर
5. M. P. स्तंबेरम

संस्कर्तुष्टीका

कलशार्णवः क्षीरसमुद्रः । धरणीगीर्वाणराजाः ब्राह्मणश्रेष्ठाः । बहुलसन्निधितयेति चतुरन्तयानाविशेषणम् । बहुलाः सान्निधयः बहिः स्थितानां दर्शनार्था अवकाशाः यस्य सः, तस्य भावः, तया । निधिपतिः कुबेरः, तेन प्रीत्या प्रहितामिव प्रेषितमिव वर्तमानम् । श्लेषेण उपमास-मर्थनम् यथा-बहवः लसन्तः निधयः शङ्खपद्मादयः यस्य सः, तस्य भावः, तयेति । कुबेरयाने तेषां निधीनामौचित्यात् । कार्तस्वरं हेम । वितानमुल्लोचः । चतुरन्तयानं शिबिका । परितःस्फुरदिति पुण्डरीकेत्यस्य विशेषणम् । पुण्डरीकं श्वेतच्छत्रम् । सर्वतोऽपि भीषणश्च अमर्षणश्च यः स्वर्भानुः राहुः, तस्य विषमदशनदंशनैः जातानि यानि अरूणि क्षतानि, तैरुत्पन्नानि यानि विवराणि, तेभ्यो निष्यन्दी यः सुधारसासारः, तेनोल्लसितं यद्रजनीकरस्य चन्द्रस्य बिम्बम्, तदिव । परितः प्रलम्बमानमुक्तादामराजिनः श्वेतच्छत्रस्य तथा निष्यन्दमानसुधाधाराराजिना चन्द्रेण उपमा । यथाह श्रीहर्षो नैषधीयचरिते—"स्वर्भानुप्रतिवार" इत्यादि (२२-१५०) ।

संख्येयोद्भटभट[1]घटितसंमर्दम्, निर्दयवेत्रिजनकनकवेत्रलताघात-प्रद्रवदु[2]द्रवनीरन्ध्रीभवन्मनुजमण्डलम्, उदग्रभर्मनिर्मितहर्म्यतल-मणिजालकान्तरकलितललिताननिजावलोकनकुतूहलि[3]पौरचञ्चला-क्षीकटाक्षमरीचिनिचयतरङ्गितोभयभागतया निरन्तराबद्धाभिनव-नीलोत्पलदाम[4]तोरणनिकरमिवातिक्रम्य क्रमेण राजपथं करतल-विलसत्करवीरकृतान्तकिंकरभयंकरमहावीरविक्रान्ताधिरूढमह[5] ... वीराग्रेसरसहस्रसंकुलबहिर्द्वारम् और्वपावकगर्वसर्वंकषदुर्वारतेजोभिः अखर्वगंभीराकृतिभि[6]रामोचितोल्लसत्क्रमिरागवारवाणैः अतिपृथुल-भुजशिखरनिवेशितसंघटितरङ्गगुलिकनलिकैर्मस्तकधृतकृत्रिम[7]सित-विलसदलकैः तरुणैः असितशिरस्त्राणैः कटिसितविलम्बिकृपाणैः परिस्फुरत्कुरुविन्दमणिप्रभा[8]पुञ्जरञ्जितैरुच्चतरप्ररूढतालैः उपरिसङ्गत-

1. M. संभट P. omits (सं)भट
2. 3. M. letter missing here.
4. M. gap here.
5. M. P. gap here.
6. M. corrupt here.
7. M. gap here.
8. M. पिञ्जर...तरूच्च

## संस्कर्तुष्टीका

आलोककाः प्रेक्षकाः । दन्तावलो गजः । वादित्रं वाद्यम् । प्रतिपालितः प्रतीक्षितः । प्रतिपालितेत्यारभ्य राजपथमित्यस्य विशेषणम् । स्तंबेरमा गजाः । जङ्घाकरिकाः जङ्घाजीविनः त्वरितगामिनो वा । तादृशा विविधगतिनाटकाः विचित्रगमनक्रमान् नाटयन्तः घोटका अश्वाः । भटाः पादाताः । उद्गतो रवः आक्रन्दः येभ्यस्ते उद्रवाः । भर्म सुवर्णम् । मणि-जालकानि रत्नघटितवातायनानि । करवीरः कृपाणः । करतलेत्यादि

नीलघनमण्डलैः अन्तरालनृत्यत्कुण्डलिविसरैः हिमवच्छिखरै[1]रिव शुभ्रैः विभ्राजमानैः विदारितारियूथैः हूणयोधैरदभ्रनिरुपमप्रतापमहिमाकर्णनपरितुष्टप्रकृष्ट[2]त्रिविष्टपसाम्राज्यलाभाभिलाषुकप्रार्थितनिजसाहाय्यकमनीषिदनुजचक्रवर्तिबलिचोदितैः आराधयितुम् [3]अतिनिभृतैः अर्णवपथायातैः यातुधानप्रधानैरिव सावधानैः स(?)अवलोकनमात्रसमुत्पन्नसंभ्रमैः विरचितयथोचितप्रणामक्रमैः [4]सांपरायिककमसमर्थैः अञ्जनाद्रिकरटिकूटैरिव काफरीसार्थैश्च अध्यासितानेककक्ष्योपलक्षितं प्रविश्य हूणराजभवनं त्रिभुवनातिशायिसुन्दरम् अवरुह्य [5]यानतः, व्यानतपरिजनोपनीतचरणसुयोजितजाम्बूनदमय-

1. M. gap here. 2. M. letter missing here.
3. P. omits from here to प्रणामक्रमैः
4. P. corrupt here. 5. P. यानतोऽप्यानत

संस्कर्तुष्टीका

हूणराजभवनमित्यस्य विशेषणम् । और्वेत्यादेः उत्तरत्र हूणयोधैरित्यनेन अन्वयः । और्वपावकः वडवानलः । अखर्वा उन्नता । कृमिरागः लोहितवर्णः । वारवाणः कञ्चुकः । रङ्गुलिकनलिकैः विस्फुरदग्निगोलकोद्गमद्‍दृन्नलिकारूपायुधविशेषैः (guns) । मस्तके शिरस्त्राणोपरि धृताः पिञ्छा शेखरवत् सिताः विलसन्तः अलकाः तादृशा अलंकाराः येषां, तैः । सितः बद्धः । कुरुविन्दो रक्तवर्णो रत्नविशेषः । तत्प्रभापुञ्जवद्राञ्जितैः रक्तवर्णैः । स्वभावतः श्वेतवर्णानामपि हूणयोधानाम् आतपकारणात्तादृशरागसंभवात् । परिस्फुरदित्यारभ्य अन्तरालेत्यन्तं हूणयाधोनां हिमवच्छिखरैः साम्यप्रतिपादनम् । कुरुविन्दमणीनां प्रभापुञ्जैः रञ्जितैः इति शिखरपक्षे । उच्चतरप्ररूढतालैः तादृशतालवृक्षैरिति

पदत्राणः पदातिः, अतिरभसोत्थितविनमदुदास्थितजनानिवेदित-निजागमनश्रुतिमुदितनृपाभ्युपगतप्रतिश्रयप्रवेशः शरन्निशाकर-करनिकरविडम्बिविशङ्कटाष्टापदकुसुमाञ्चिताञ्चललसद्वितानालंकृता-याम् उदग्रतरस्निग्धमुग्धमृष्टहाटकद्रवोपदेहभासुरस्तंभरुक्तातिभिः अवनितलाद्विजेतुमिव सुधर्मामुद्यतायां विद्योतमाननानावर्ण-कुथास्तर्णायामर्णवकन्यानटीरङ्गस्थलायमानायां सभायां समन्ततः कनकाभित्तिघटितस्वच्छतरमणिमुकुरनिकुरुम्बप्रतिबिम्बितनैकनि-जात्मभिः महात्मभिः कलधौतमयोत्तुङ्गप्रातिस्विकासनविराचितो-

---

संस्कर्तुर्टीका

शिखरपक्षे। तालः खड्गः, उच्चतरा आयताः, प्ररूढा दृढबद्धाश्च ताला येषां तैरिति योधपक्षे। उपरि संगतः नीलघनानां नीलमेघानां मण्डलः येषामिति शिखरपक्षे। योधपक्षे घनाः मुद्गरा आयुधविशेषाः। 'घनः सान्द्रे दृढे दाढर्ये विस्तारे मुद्गरेऽम्बुदे' इति हेमचन्द्रः। कुण्डली सर्पो मयूरः चित्रवर्ण-मृगो वा शिखरपक्षे। हूणयोधपक्षे कुण्डलिनः कुण्डलधारिणः भारतीय-(Indian) योधाः, तेषां विसरः समूहः येषां तैः। मध्ये मध्ये भारतीय-योधैरप्यन्वितैरिति भावः। भारतीयाना हि कर्णाभरणधारणं लक्षणं, यद्व्यतिरेकाच्च अन्यदेशीया हूणाः तुरुष्काश्च अविद्धकर्णनाम्ना व्यवह्रियन्ते।

अदभ्रेत्यादि काफरीसार्थैरित्यस्य विशेषणम्। 'काफरी' इति कृष्णवर्णाः 'नीग्रो' (Negro) जातीया योधाः। ते च तदा वेतन-मङ्गीकृत्य यस्य कस्यापि कृते अयुध्यन्त। प्रांशुहूणसेनायां ते बहव आसन्। 'Caffre' इत्युक्ताः। अदभ्रनिरुपमप्रतापः आनन्दरङ्गस्य वा प्रांशुहूणपतेर्वा। तदाकर्णनेन परितुष्टः प्रकृष्टात्रिविष्टपसाम्राज्यलाभाभिला-षुकः तदर्थं च प्रार्थितनिजसाहायकः स्वर्गसाम्राज्यलिप्सया याचिता-नन्दरङ्गहूणपतिसाहायको यो मनीषी बुद्धिमान् दनुजचक्रवर्ती बलिः

प्रवेशनैः मानैकधनैः [1]आत्मदर्शनसमनन्तरमेव ससंभ्रममुज्झित-स्वस्वासनैः सदोगतैः[2] मतिमत्तमैः मन्त्रिसत्तमैः आराद‌ुपास्य-मानेन चित्ररुचिमणिरत्ननिचिततप्तगाङ्गेयमयोत्तुङ्गभद्रासनमास्थि-तेन सविधस्थितावहिताविनीतजनाविहिततालवृन्तचामरताम्बूलकला-चिकादिविविधोपचारेण हूणचक्रवर्तिना सप्रणयमर्यादम् अतिवि शालनयनाञ्चलसमुद्यदभङ्गुरकृपारसवीचीमालाभिराप्लावितः समुदा-चरन् पुरस्तान्निर्दिष्टम् अहस्करमरीचितिरस्कृतिपटीयस्तर-निस्तुलमणिस्तोमजुष्टं प्रहृष्टः समुन्नतं पीठमध्यासाञ्चक्रे ॥

1. M. does not have from आत्मदर्शन to सदोगतैः
2. P. has after this मष....त्तमैः मन्त्रिसत्तमैः ।

संस्कर्तुष्टीका

पातालवासी, तच्चोदितैः । आराधयितुं हूणपतिमानन्दरङ्गं वा । अर्णव-पथागतैः पातालादिति यातुधानपक्षे, देशान्तरादिति काफरीयोधपक्षे । यातुधानैरिव बलिचक्रवर्त्यनुजीविभिः । साहसादिना कृष्णवर्णेन च काफरीणां यातुधानैरुपमानम् । अवलोकनमात्रेति । स्वामिनां अवलोकनमात्र एव जातसंभ्रमैः सद्यश्च विरचितोचितप्रणामैश्च । सांपरायिकं कर्म युद्धम् । अञ्जनाद्रिकरटिकूटैरिति वर्णसाम्यादुपमा । त्रिभुवनातिशायि चादः सुन्दरं च त्रिभुवनातिशायिसुन्दरम् । व्यानताः नम्राः । पदत्राणं पादुका । उदास्थितजनाः द्वारपालकाः । प्रतिश्रयः अगारम् । विशङ्कटो विशालः । अष्टापदं सुवर्णम् । मुग्धं मनोज्ञम् । हाटकद्रवोपदेहः सुवर्णद्रवोपलेपः । रुक् कान्तिः । ऊर्ध्वप्रसरत्कान्ति-परम्पराभिः सुधर्मां देवसभां विजेतुमिव उद्यतायाम् । आत्मदर्शनम् आनन्द-

अधिरुह्य तदा तदासनं ह्याधिकं रङ्गमहीपतिर्बभौ ।
विनुतः परितः सदोगतै[1]र्नतसिध्यै(द्धै)रिव मेरुमंशुमान् ॥

अथ हूणपरङ्गभूपती प्रथमौ मन्त्रविदां [2]महामती ।
सदसि श्रितहीरवृद्धये [3]मुदितं मन्त्रमकुर्वतामुभौ ॥ २ ॥

आनन्दरङ्गप्रहितैः प्रधानैराकारितो हीरनृपो विनीतैः ।
आगात्सहर्षानुगताप्तवर्गो हूणेशहर्यक्षगुहां सभां ताम् ॥३॥

उष्णीषेण जयश्रियो विलसितं स्फाराट्टहासश्रिया
हेलाकुण्डलितेन नैजयशसेवावर्तामनेन वै ।

1. M. न तु. Both M. and P. read सिद्धथैरिव I have taken it as सिद्धैरिव. P. has an explanatory note here which is unfortunately lost at the beginning, owing to a break in the leaf here: अत्र......पक्षया रवेरुदयस्थानम् ।

2. P. महापती 3. P. मुदितौ मन्त्रकृतौ बभूवतुः

संस्कर्तुष्टीका

रङ्गदर्शनम् । गाङ्गेयं सुवर्णम् । उपास्यमानेनेत्यादि हूणचक्रवर्तिनेत्यस्य विशेषणम् । कलाचिकः पात्रविशेषः ।

समुदाचरन् वन्दनादि उचितं समुदाचारं प्रदर्शयन् ॥ अधिरुह्येति । आसनमेर्वोः, आनन्दरङ्गांशुमतोः सदोगतसिद्धयोश्चोपमानम् । नताश्च ते सिद्धाश्च तैः नतसिद्धैः परितो नुतः अंशुमान् मेरुमारुह्येव बभौ ॥ १ ॥ अथ हूणेपेति । मुदितं यथा तथा मन्त्रमकुर्वताम् ॥ २ ॥ आनन्दरङ्गेति । आकारित आहूतः । हर्यक्षः सिंहः ॥ ३ ॥

अद्राक्षीद्धवलांशुकोज्ज्वलमसावानन्दरङ्गप्रभुं
विश्रान्तं कलशाब्धिवीचिविलसन्मन्थानशैलं यथा ॥ ४

आरादागत्य हीरस्तदनु सदसि तैरुत्थितैर्मन्त्रिमुख्यै
रङ्गेन्द्रेणापि राज्ञा प्रणयभरजुषानन्दितः प्रश्रितात्मा ।
हृष्टो निर्दिष्टमाप प्रमुदितसचिवः पीठमुद्वीक्ष्य हूण-
क्षोणीन्द्रोऽप्येनमूचे वचनमथ शुभोदर्कमर्कोग्रतेजाः॥५

आसीत्सार्थकमद्य पूर्वसुकृतं प्राप्तं यशश्चोज्ज्वलं
धन्यं जन्म मनश्च तुष्टमखिलश्लाघ्यश्च मे विक्रमः ।
ख्यातं सार्थकमस्य रङ्गनृपतेर्मन्त्रक्रियाकौशलं
यत्त्वं हीर सखे पुनर्हतरिपुः प्राप्तोऽसि दिष्ट्याऽक्षतः॥६॥

किञ्चाकर्णय हीर रङ्गनृपतिः सञ्चिन्तयंस्ते हितं
मुञ्चन्नाञ्चितधीरहर्निशमसावाहारनिद्रे उभे ।

---

संस्कर्तुष्टीका

उष्णीषेणेति । जयश्रियः स्फाराट्टहासस्य श्रिया इव स्थितेन, हेला-कुण्डलितेन सविलासं वह्यावर्तैः बद्धेन अत एव आवर्तमानेन तमभिवल-मानेन नैजयशसेव स्थितेन उष्णीषेण शिरोवेष्टनेन विलसितम् ॥ मन्थान-शैलं यथा । मन्थानशैलस्यापि जयलक्ष्मीस्फाराट्टहासश्रीविलसितत्वम्, हेलाकुण्डलितत्वम्, (हेलया कुण्डलिना सर्पेण पाशितत्वं देवासुरैः वासुकिरूपपाशेन बद्धत्वम्, आवर्तमानत्वम्, धवलांशुकोज्ज्वलत्वम्, (अंशुकः मन्थबन्धरज्जुः नेत्राख्यः वासुकिरूपः,) इति विशेषणानि वर्तन्ते ॥ ४ ॥ आरादित्यादि । आरात् समीपे । शुभोदर्के भाविशुभम् ॥ ५ ॥ आसीदित्यादि । यत् त्वं दिष्ट्या हतरिपुः अक्षतः पुनः प्राप्तः ॥ ६ ॥

चञ्चच्छक्तिमनीनयद्युधि रिपुं यद्दुर्जयं पञ्चतां
तच्चातुर्यनिधेरतः क्षितितले कोऽन्योऽस्ति कर्तुं क्षमः ॥७

हन्ता हन्त स नासरस्य नतसन्तानस्य सन्तानको
हीरोदारगुणस्तवैष सकलश्रेयःप्रदाताविता ।
एनं मेनममर्त्यनायक इव त्वं संश्रयन्नाश्रवः
प्राज्यामाप्तजनैरमुष्य कृपया राज्यश्रियं प्राप्नुहि ॥८॥

इति गिरमुदितां तेनश्रिया समज्या निशम्य मुदितां तेन ।
या वीरोपास्तिमिता बभूव नित्यं धृतोरु[1]रोपा स्तिमिता॥९॥

1. M. धृतोरि

संस्कर्तुष्टीका

किञ्चेति । आञ्चितधीः शोभनधीः । चञ्चच्छक्तिं क्षिप्रप्रचारक्षमशक्तिं दुर्जयं रिपुं पञ्चतां यदनीनयत् । तत् कर्म चातुर्यनिधे अतः अस्मात् रङ्गप्रभोः अन्यः कः क्षितितले कर्तुं क्षमः अस्ति ॥ ७ ॥ हन्तेति । हन्त ! स एष आनन्दरङ्गः नासरस्य हन्ता, नतसंतानस्य नतसमूहस्य सन्तानकः कल्पकवृक्षः, दातेत्यर्थः । सकलश्रेयःप्रदाता । अविता रक्षिता । मेनं मायाः लक्ष्म्याः इनः प्रभुः विष्णुः उपेन्द्रः, तम् , अमर्त्यनायकः इन्द्रः इव । आश्रवः वचने स्थितः ॥ ८ ॥ इति गिरमिति । तेनश्रिया ता बुद्धिः तया इनस्य सूर्यस्येव श्रीः औज्ज्वल्यं यस्य तेन । तेन इति इत्थम् उदिताम् उक्तां मुदितां सानन्दां गिरं निशम्य या समज्या सभा नित्यं वीरोपास्तिं वीराभिनन्दनामिता प्राप्ता सा स्तिमिता, धृतोरुरोपा धृतः उरुः रोपः उन्नतिः वृद्धिः यस्यास्सा तादृशी बभूव ॥९॥ अधिगतेति । अधिगता राज्ञः प्रांशुहूणराज्ञः अनुज्ञा येन सः, तम् । हीरम् । रङ्गेन्द्रो अभिषिक्तम् अकृत । पुनः कीदृशं हीरम् ? राजानुज्ञम् राजेति चन्द्रपर्यायः, अतः चन्द्रनामकस्य

अधिगतराजानुज्ञं त्वभिषिक्तं हीरमकृत राजानुज्ञम् ।
नेमैर्गुरुणा मान्यै रङ्गेन्द्रो मन्त्रिभिश्च गुरुणा मान्यैः॥१०॥

तस्मिन् वीरवरे तु हीरनृपतौ राज्याभिषिक्ते तदा
सर्वे ते कलितोपदा जनपदाधीशाः प्रणेमुर्मुदा ।
भेर्यः कोणहता विनेदुरभितः स्फीताः शतघ्नीगणा
हूणैः प्राणिभयंकराश्च शतशः सन्धुक्षिता· सन्तताः ॥

अवाप्य महतीं श्रियं विजयरङ्गभूपादतः
स्तुतस्तु विबुधैर्मुहुर्मुहुरवाप्ततोषैरसौ ।
द्विषद्दलविजित्वरं स्वबलजालमानन्दयन्
रराज हरिवीतिवद् *विततगेयकीर्तिच्छटः ॥ १२

को. टि.

* P. ततं वाद्यम् ।

संस्कर्तुष्टीका

मित्रस्य अनुज्ञा यस्यः सः हीरः, तम् । कैरभिषिक्तमकुन ? गुरुणा आचार्येण । नेमैः अन्यान्यैः । मान्यैः महनीयैः पुरुषैः । गुरुणा मान्यैः बृहस्पतिना मान्यैः मन्त्रिभिश्च ॥ १० ॥

तस्मिन्निति । कलितोपदा दत्तोपायनाः । शतघ्नीगणाः सन्धुक्षिताः, 'भीरङ्गी'नामायुधाः स्फोटार्थं दीपिताः ॥११॥ अवाप्येति । विबुधैः प्राज्ञैः । हरिवीतिः हरिहय इन्द्रः । वीतिरश्वः । वितता विपुला गातुं योग्या कीर्तिच्छटा यशस्तोमः यस्य सः । विविधं ततेन तन्त्रीवाद्येन गेया कीर्तिच्छटा यस्य स इति वा ॥ १२ ॥ समुच्छ्रितेति । दीप्रा दीप्तिशीला । ललितहेम-पाञ्चालिका मनोज्ञसुवर्णबिम्बा इव वर्तमानाः सुदृशः ललनाः ताभिः कलिता गीतिका यस्यां सा ॥ १३ ॥

समुच्छ्रितपताकिका सलिलसिक्तसद्वीथिका
सहर्षगृहमेधिका सदनदीप्रदीपालिका ।
लसत्कुसुममालिका ललितहेमपाञ्चालिका-
सुदक्कलितगीतिका नवपुरी बभौ सा तदा ॥ १३ ॥

चक्रेणाशु निहत्य नासरमरिं यः कौरवं देवकी-
सूनुः पार्थमिवाप्तराज्यमकरोदानन्दरङ्गो नतम् ।
हीरक्ष्मापतिमुन्नतः स तु सुखी लक्ष्म्या चिरं जीवतु
प्रोचुः सर्वजनास्तदेत्थमवनावासेतुगङ्गातटम् ॥ १४ ॥

[1]तदनु तत्र समितौ अवहितमहितसचिवसंहतौ सुमतौ उपशृण्वति हूणनृपतौ, सुहृत्सु मिषत्सु सामन्तभूभृत्सु च, विनयावनतः प्रणयानुसृतं सदयहृदयं तिरुवेङ्कटनृपतनयं निजभागधेयमिव प्रकटिताकृतिविशेषं प्रकृतिवत्सलं धृतिमन्तं हिमवन्तमिव आर्यानुकूलं हीरक्षितिपतिः अक्षीणांसः प्रक्षीणाधिः सुधीर्मधुराक्षरमित्थमाचचक्षे ॥

1. M. has श्रीरस्तु here.

संस्कर्तुष्टीका

देवकीसूनुः अरिं कौरवं चक्रेण निहत्य पार्थमिव यः आनन्दरङ्गः चक्रेण स्वाज्ञाचक्रेण नासरमरिं निहत्य हीरमवाप्तराज्यमकरोत् स ताहश उन्नतः आनन्दरङ्गः लक्ष्म्या चिरं जीवतु ॥ १४ ॥ तदन्विति । अवहिताः महितास्सचिवाः, तेषां संहतिः समूहः यस्य, तस्मिन् सुमतौ हूणनृपतौ उपशृण्वति । धृतिमन्तं धीरम् । आर्यानुकूलम् आर्याणां साधूनाम्, आर्यायाः पार्वत्याश्च अनुकूलम् । अक्षीणांसः विपुलांसः ॥

त्वन्नेत्रांकुरितस्त्वदीयकरुणापीयूषधारैधित-
स्त्वद्धैर्योल्लसदालवालवलयस्त्वन्मन्त्रकाण्डोज्ज्वलः ।
[1]त्वच्छक्त्युल्बणपल्लवोऽरिजयजत्वत्कीर्तिपुष्पाञ्चितः[2]
साम्राज्याद्भुतसत्फलो विजयते मद्भागधेयद्रुमः[3] ॥ १५

इदानीं बन्धूनामहमभवमुद्दामकरुण !
त्वया रङ्गक्षोणीहरिहय ! सभाज्यः क्षितितले ।
सवित्री सम्पत्तेस्तव वसतु मैत्री मयि ततो
भवित्रीतः श्रेयस्ततिरपि कलत्रीकृतमही ॥ १६ ॥

सखा *सखायं तु नियन्तुमाहवे हवे रिपूंस्ते [3]भट उद्भट स्थितः ।
त्वया धिया सान्द्र स चन्द्रभूपतिः प्रतीक्ष्य रक्ष्योऽनिशमंशुमत्प्रभः॥

1 M. gap here. 2. P. पुष्पाञ्जलिः
3. 4. M. gap here.

को. टि.

* M. P. सख ! खं दया, सदयेत्यर्थः ।

संस्कर्तुष्टीका

त्वन्नेत्रेति ॥ १५॥ इदानीमिति । हरिहयः इन्द्रः । ततः मैत्रीतः । कलत्रीकृतमही श्रेयस्ततिः इतः भवित्री ॥ १६ ॥ सखेति । सख सदय ; खं दया । अयं सखा चन्द्रः चण्ड्रासाहेब्नामकः । हवे निर्देशे स्थितः अत एव भटः, भट इव आज्ञाकरः । हे उद्भट इति आनन्दरङ्गसंबुद्धिः । धिया सान्द्रेति च तस्यैव संबुद्धिः । ते रिपून् आहवे नियन्तुं निग्रहीतुम् । अंशुमत्प्रभः सूर्यप्रकाशः चन्द्रः प्रतीक्ष्य सावधानं रक्ष्यः ॥ १७ ॥

समानुजानातु बलैरमा गृहानिमान् यियासूनखिलक्ष्मापतीन् ।
भवानितः प्रीतमना मनस्विनः प्रतर्पितानीप्सितदिव्यवस्तुभिः॥१८॥

तावत्प्रीतः कृताशीः सपदि मुजभरेणात्मवश्येन सार्धं
सार्धं हीरक्षितीन्द्रं बहुलबलजुषा सावरोधं सयूथम् ।
सामन्तक्षोणिपालान् बहुमतिमुदितान् सन्नतांश्चोन्नतश्रीः
राज्ञानुव्रज्य रङ्गक्षितिपतिरनघः प्राहिणोदादवन्तीम् ॥ १९ ॥

अथ प्रयाते सबले बलेशैः सहानुकूलैः सहितैः स हीरे ।
प्रथीयसीं प्रीतिमगादगाधस्वामित्वकार्याम्बुधिपारगत्या ॥

अत्रान्तरे—
श्रुत्वाध्यक्षसुदक्षनासरमथ न्यक्षाश्ववद् दुःसहं
दक्षं दक्ष इवास्तमाहवकृतं रूक्षं विपक्षं बलात् ।*

को. टि.

* P. क्षं विरोधः । न्यक्षाश्वः अन्तकः । दक्षः शिवः । आहवे युद्धं यज्ञः ।

संस्कर्तुष्टीका

समेति । हे सम सलक्ष्मीक ! भवान् प्रीतमनाः सन् इमान् मनस्विनः ईप्सितादिव्यवस्तुभिः प्रतर्पितान् बलैरमा बलैस्सह इतः गृहान् यियासून् यातुमिच्छतः अनुजानातु ॥ १८ ॥ तावदिति । आत्मवश्येन रङ्गेन्द्रनिदेशस्थितेन मुजभरेण मुज़फ़र् खान्नामकेन सार्धम् । राज्ञा हूणराजेन सह अनुव्रज्य कियद्दूरमिव गत्वा । आदवन्तीम् अदोनीनामकं स्थानम् ॥ १९ ॥ अथेति । स आनन्दरङ्गः । पारगत्या तरणेन ॥ २० ॥

प्रेक्षावत्तिरुवेङ्कटेन्द्रतनयक्षोणिभृता रक्षितं
हीरं वीरशिखामणिर्मुदमधाड्डिल्लीपुराधीश्वरः ॥ २१ ॥

ततस्तातस्त(त)नतसमस्तक्षितिपतिमुकुटतटघटितोच्चावचानर्घनिरस्तपटलमणिरत्नपटलबहुलप्रभाशबलस्वीयपादपीठं कमठाहिपरिबृढदुर्धरधराभरणनिपुणतरसारवन्निजभुजदण्डः, दण्डितशतानीकपरिपन्थिप्रकाण्ड[1]शतः शतानीकविजयी जानकीजानिरिव धार्मिकलक्ष्मणान्वितः शतानीकपरश्शतभट्टारकजनानुग्रह[2]पात्रभूतो भूतेश इवाप्रतिहतनिजैश्वर्यः शौर्यनिधिः निधिनाथ इव निरवधिकसम्पदनवरतप्रपन्नजनता[3]भिलषितप्रतिपादनजनितयश-

1. M P. gap here. 2. M. corrupt here. 3. M. gap here.

संस्कर्तुष्टीका

न्यक्षो महिषः सोऽश्वः वाहनं यस्य सः, अन्तकः। तमिव दुस्सहम् आहवकृतं कृतरणं रूक्षं विपक्षं नासरं बलाद् अस्तं श्रुत्वा। आहवकृतं यज्ञकृतं दक्षं दक्षप्रजापतिमस्तं नाशितं दक्षः शिवः श्रुत्वेव। अध्यक्षसुदक्षनासरम् इत्यत्रार्थो न स्फुटः ॥२१॥ तातस्तताः ततस्ततः समागताः। निरस्तपटलानि निरस्तसूर्याणि। पटलः रलयोरभेदेन पटरः सूर्यः। 'आरोगो भ्राजः पटरः पतङ्गः' इति तैत्तिरीयारण्यके (१. ७) पटरशब्दः सप्तसूर्यनामस्वन्यतम आम्नातः। तादृशानि मणिरत्नपटलानि। कमठः आदिकूर्मः। अहिपरिवृढः आदिशेषः। शतानीकपरिपन्थिनः शतसंख्याकसमरवर्तिनः परिपन्थिनः। शतानीकविजयी तन्नामकपुराणप्रसिद्धराजवद्विजयी। धार्मिकलक्ष्मणेन धर्मिष्ठसौमित्रिणा अन्वितो रामः। अयं तु धार्मिकैः लक्ष्मणैः लक्ष्मीवद्भिः अन्वितः। शतानीकाः वृद्धाः परश्शतं ये भट्टारकजनाः ब्राह्मणाः तदनुग्रहपात्रभूतः।

स्तिरस्कृतस्वस्तरुनिवहौदार्यप्रशस्तिः सौन्दर्यातिशयपराकृतमकर-केतनापघनो घनाघनगंभीरमधुरध्वनिः अनघमनीषिगणगणनीयमहि-मा महानहंमदशाहुनामा नामावशेषितामित्रभूतनिजामात्मजनासर-निरुपमबलवैभवमित्रतमविजयानन्दरङ्गक्षितिपतिप्रहितवाचिक[1]-निशमनोद्गाढतरान्तरानन्दतुन्दिलगात्रो, वेत्रिजनैः सदः सरभस-मानीतान् [2]विनीतान् आनमतः प्रीतमनसः सचिवगणानकवगुणान् गीर्वाणपतिरिव गीर्वाणानुपविष्टान् इष्टतमानित्थमर्थोपहितां वाचमाचचक्षे ॥

भो भो मन्त्रिवरा वराकचरितो यत्प्रेषितं नासरो
हीरं हन्तुमनुद्रुतो हि बहुभिर्युक्तो बलौघैस्तु यः ।
तस्यारेर्युधि निग्रहार्थमथ यत् संप्रार्थितो रङ्गराट्
मित्रं नव्यपुरीश्वरस्तदखिलं ज्ञातं भवद्भिः खलु ॥२२॥

2. P निशमनेन गाढतर 3. P. omits this word.

संस्कर्तुष्टीका

निधिनाथः कुबेरः । मकरकेतनापघनः मन्मथवपुः । घनाघनो वर्षुको मेघः । अहम्मदशाहुनामा 'अह्मद् षा' इति विदितः । निजामात्मजनासरः आसब्जानामकनिजामात्मजो नासरः । नामावशेषित-तादृशनासरो निरुपमबलवैभवो मित्रतमश्च यो विजयानन्दरङ्गक्षितिपतिः, तत्प्रहितेत्यादि । अकवाः अहीनाः गुणाः येषां तान् ॥

भो भो इति । प्रेषितम् अस्माभिः दक्षिणापथनाथतां दत्वा प्रेषितं हीरं हन्तुं योऽनुद्रुतो नासरः, तस्यारेर्निग्रहार्थं यत्प्रार्थितो रङ्गराट् नव्य-पुरीश्वरः नूतनपुराधीश आनन्दरङ्गः, तदखिलं ज्ञातम् ॥ २२ ॥ गत्वेति ।

गत्वेतः परुषो द्विषन् स हि रुषा जाल्मो निजामात्मजः
कुर्वन् दक्षिणनीवृतः परिवृतः सैन्यैश्च विध्वंसितान् ।
साहाय्यं मयि तन्वता धृतिमता हीरं च तं रक्षता
सिंहेनेव गजः प्रसह्य सहसा रङ्गेण रङ्गे हतः ॥ २३ ॥

ब्रूमः किमस्य सचिवा बत मन्त्रशक्तिं
यद्दुर्जयं युधि बलान् निखिलैर्बलाढ्यैः ।
योगेन नासरमसीमबलं बलौघै-
र्नामावशिष्टमतनिष्ट मदिष्टदो यः ॥ २४ ॥

किञ्च तस्य धरणौ न कथं स्याद्धूणनेतुरखिलेप्सितसिद्धिः ।
यस्य निस्तुलगुणः सचिवोऽयं वृत्रहन्तुरिव विष्णुरुदारः ॥ २५ ॥

1. M. corrupt here.

को. टि.

* P. धृतिः प्रीतिः ।

संस्कर्तुष्टीका

निजामात्मजो नासरः । दक्षिणनीवृतः दक्षिणदेशान् विध्वंसितान् कुर्वन् । सैन्यैः परिवृतश्चेति तस्य नासरस्यैव विशेषणम् । रङ्गे युद्धरङ्गे ॥ २३ ॥ ब्रूम इति अस्य आनन्दरङ्गस्य । योगेन उपायेन । मदिष्टदः मदीयाभीष्टस्य नासरनाशहीरप्रतिष्ठापनरूपस्य प्रदाता ॥ २४ ॥

किञ्चेति । वृत्रहन्तुरिन्द्रस्य विष्णुरिव उपेन्द्र इव ॥ २५ ॥ बहुश इति । प्रशस्य आनन्दरङ्गमिति शेषः । सदोऽन्तरे सभामध्ये स्वमन्त्रिभिः विमृशन्, उदारयशसः अतिमानशालिनोऽस्य आनन्दरङ्गस्य बहुमान-

बहुशः प्रशस्य स भृशं सदोऽन्तरे
विमृशन्नुदारयशसः स्वमन्त्रिभिः ।
*धृतिमानवोचदतिमानशालिनो
मतिमानथास्य बहुमानहेतवे ॥ २६ ॥

मन्त्रिषु मुख्यो यस्मादद्यप्रभृति प्रथामसावस्मत् ।
जगति वजारतरायश्रीविजयानन्दरङ्गनामैतु[1] ॥ २७ ॥

किञ्च कृतज्ञः सचिवाः प्रीत्या मित्राय मित्रसमरुचये ।
पञ्चतुरङ्गसहस्रप्रभुतां महितां ददामि परमस्मै ॥ २८ ॥

तस्यामोघपराक्रमस्य कृतिनः सर्वातिथेः श्रीमतः
पुत्रोऽध्यर्धसहस्रसंख्यहयसाद्यध्यक्षतां सत्कृताम् ।

---

संस्कर्तुष्टीका

हेतवे बहुमानप्रदानार्थं धृतिमान् प्रीतिमान् मतिमान् डिल्लीश्वरः अवोचत् ॥ २६ ॥ मन्त्रिष्विति । यस्मादयं मन्त्रिषु मुख्यः, ततोऽद्यप्रभृति जगति अस्मत् अस्मत्सकाशात् वजारतरायेति विरुदान्वितं श्रीविजयानन्दरङ्ग-नाम एतु प्राप्नोतु । 'वजारतराय' इत्यस्य मन्त्रिमुख्य इत्यर्थः ॥ २७ ॥ किञ्चेति । सचिवा इति संबुद्धिः । कृतज्ञः अहम् । मित्रः सूर्यः तत्समरुचये अस्मै आनन्दरङ्गाय पञ्चतुरङ्गसहस्रप्रभुतां तावत्संख्याकाश्वसेनापतित्वविशिष्टं 'मन्सब्' इति विदितं गौरवं ददामि ॥२८॥ तस्येति । तस्य पुत्रः रङ्गनतुः पुत्रः मुद्दुविजयानन्दरङ्गनामा । अध्यर्धसहस्रसंख्या पञ्चशताधिकसहस्र-संख्या अश्वसादिनः अश्ववीराः तदध्यक्षताम् । कोकनदाह्वयं दुर्गं चेङ्गल्पाट्टिति ख्यातं स्वमातामहनिवासप्रदेशं तदुपरि बहुधनाः स्फीता नदीमातृकाः

दुर्गं कोकनदाह्वयं बहुधनास्स्फीता नदीमातृकाः
सीमाः सोमवदीड्यगुः स भजतां ख्यातिं च मच्छासनात् ॥ २९

मदिष्टतमरङ्गेन्द्रसहायः सोऽपि हूणराट् ।
उपैतु सप्तसाहस्रतुरगेशत्वमादृतम् ॥ ३० ॥

निष्कत्रिसप्तनियुतोद्भवहेतुभूत-
सीमा मयाद्य वितताः स मुदा वितीर्णाः ।
प्राप्नोतु हूणनृपतिर्बहुदुर्गयुक्ताः
स्निग्धेन मे स्वसचिवेन सहैव तेन ॥ ३१ ॥

इत्थममृतस्यन्दीनि व्याहृतान्यमूनि वचनानि [1]भृशमनुमोदयद्भिः सभासद्भिः सप्रश्रयमर्चितेन [2]प्रवारणोत्सुकमनसा

1. M. gap here. 2. M. प्रचारण

संस्कर्तुष्टीका

नद्यम्बुसंपन्नाः सीमाः ग्रामसीमाश्च । सोमवत् चन्द्रवद् ईड्यगुः प्रशस्यकिरणः स्तुत्यकान्तिरिति यावत् ॥ २९ ॥ मदिष्टेत्यनेन प्रांशूहूणपतये डूप्लेनामकाय च सप्तसहस्राश्वपतित्वरूपमनुग्रहं दीयते ॥ ३० ॥ निष्केति । त्रिसप्तलक्षसुवर्णप्राप्त्यौपयिकीः सीमाः । मे स्निग्धेन स्वसचिवेन तेन आनन्दरङ्गेण सहैव ॥ ३१ ॥

प्रवारणं काम्यदानम् । सार्वभौमेनेव । सार्वभौमो नाम अष्टदिग्गजेष्वन्यतमः कुबेरदिशि वर्तमानः । अतिबहुलदानेत्यत्र दानं प्रदानं मदजलं च ; आश्रितानां आलिः समूहः । आश्रिताश्च ते अलयः भ्रमराश्च । पुण्यजनेश्वराः पुण्यकृज्जनमुख्याः । सार्वभौमनामादिग्गजपक्षे पुण्यजनेश्वरः कुबेरः । तामरसासनः ब्रह्मा । शतानन्दाभिख्या शतानन्द इति नाम तस्य ब्रह्मण एव ।

अहंमदशाहुधरणीसार्वभौमेन सार्वभौमेनेव सन्ततमतिबहुलदान-प्रीणिताश्रितालिमता वशीकृतपुण्यजनेश्वरमनसा तामरसासनेनेव अधिगतनिरुपमशतानन्दाभिख्येन प्रेषितानि निजमहीपतिबहुल-बहुमतिसहितानि महितविनीतमहामात्रजनोपनीतानि करितुरग-महार्हाम्बरनिस्तुलमौक्तिकशेखरमहोन्नतवाद्यबिरुदादीनि अनु-रूपाणि उपायनानि श्रीमतीमपि पत्रिकाम् अखिलविबुधजन-महनीयाम् अकृत्रिमवचनपद्धतिमिव प्रमाणभूताम्, अभिमतफल-दात्रीं धात्रीमिव राज्यलक्ष्म्याः, लक्ष्मीमिव आश्रिताच्युतसुन्दराक्षर-मूर्तिम्, मूर्तिमतीमिव निजभाग्यरेखामुपश्रुत्य पुरस्ताद् द्रागागत-श्रावकदूतमुखाद् अतिमात्रहर्षानुगतमित्रामात्यनैगमसमुदायः सहूणराजः प्रमुदितमनाः प्रत्युद्गम्य, सङ्गम्य च तैरागतैः प्रधान-पुरुषैः, प्रतिगृह्य तान्युपायनानि, प्रतीक्ष्यचरितः क्षितिधर-शिखरोच्चतरप्रसाधितसिन्धुरवरस्कन्धाधिरोपितडिल्लीश्वरशासनः प्रद-

---

संस्कर्तुष्टीका

डिल्लीश्वरपक्षे शतं आनन्दाः, अभिख्या कीर्तिः शोभा वा । अधिगतौ निरुपमौ तौ येन । महामात्रजनाः मन्त्रिणः । मौक्तिकशेखरः डिल्लीश-संमानाचिह्नभूतः । अकृत्रिमवचनपद्धतिः वेदः । प्रमाणभूतां दुर्गसीमादि-संमानलाभानां सार्वभौमभूतडिल्लीश्वरानुमतत्वेनैव अन्ततः प्रमाणत्वात् । आश्रिता अच्युतस्य सुन्दरा अक्षरा मूर्तिः यया सा । आश्रिता अच्युताः अभ्रष्टाः सुन्दराः अक्षरमूर्तयः वर्णनिवेशाः यस्यां सा । श्रावकाः श्रावयितारः तादृशा दूताः । प्रतीक्ष्यचरितः गौरवार्हचरितः । प्रसाधितः अलंकृतः । सिन्धुरः गजः ।

क्षिणीकुर्वन् सर्वामपि नगरीमलंकृताम्, स्वानितयशःपटहं प्रविश्य सभाम् उरुमणिप्रभासुराम्, उपविश्य च, भास्वरवेषैः भूसुरवर्यैः कृतस्वस्त्ययनः, विदितसार्वभौमशासनार्थैरमात्यसार्थैः आरादुपास्यमानः, प्रशस्यमानो वयस्यजनैः, अभिवन्द्यमानः श्रेणिमुख्यैः, आभाष्यमाणः कुलवृद्धैः, आलोक्यमानः सानन्दम् अखिलसाधुसमुदयैः, संभाव्यमानो नैगमप्रवरैः, संस्तूयमानो वन्दिवृन्दैः, वन्दारुजनमन्दारो वृन्दारकपतिरिव वृन्दारकभद्रागमविलसन्नन्दनयुगलानन्दितान्तरः स्वमौलिकालितडिल्लीश्वरप्रेषितललितमौक्तिकशेखरः सर्वप्रकृतियथोचितविधिविहितगृहीतोपग्राह्यजाल-श्रीवजारतराय-विजयानन्दरङ्गभूपालः [1]संमान्य सभासदः सर्वानपि प्रशस्तसमस्तवस्तुभिः बहुभिः [2]वसनभूषणवाहनादिभिः यथाभिलषितम्, सह सहजेन सहजसिद्धविनीतिमता प्रीतिमता

1. M. corrupt here. 2. M. gap.

संस्कर्तुष्टीका

श्रेणिमुख्यैः वाणिग्गोष्ठीमुख्यैः । नैगमा वाणिजः पौरा वा । वृन्दारकपतिः इन्द्रः । वृन्दारकः श्रेष्ठो मनोरमो वा । भद्राः तन्नामका अगमा वृक्षा तैर्विलसन्नन्दनं वनम्, वृन्दारकः श्रेष्ठः भद्रः आगमः वेदरूपः तेन विलसन्नन्दनः विष्णुः उपेन्द्ररूपः । 'आनन्दो नन्दनो नन्दः' इति सहस्रनामसु । तादृशवनोपेन्द्ररूपनन्दनयुगलानन्दितान्तरः इन्द्रः । आनन्दरङ्गस्तु मनोरमेण भद्रागमेन शोभनविद्यया विलसता नन्दनयुगलेन पुत्रयुग्मेन आनन्दितान्तरः । उपग्राह्यमुपायनम् ।

प्रतीतः हृष्टः । पङ्क्तिस्यन्दननन्दनः दशरथपुत्रो रामः । अवनिभूः सीता रामपक्षे । आनन्दरङ्गपक्षे अवनिभुवः मनुष्याः ॥ प्रांश्विति ।

सुमतिना तिरुवेङ्कटनृपतिना च प्रतीतप्रियजनः सर्वजननयनानन्दनः पङ्क्तिस्यन्दननन्दन इव सन्ततानुरक्तावनिभूः अभूतपूर्वं महान्तमुत्सवमनुबभूव ॥

प्रांशु[1]क्षितीशोऽपि यशोमहत्त्वं डिल्लीशसंमानमलभ्यमन्यैः ।
रङ्गेन्द्रसाह्याद‌खिलं च सौख्यं प्राप्तं [2]मयेतीदृगमन्यतासौ ॥ ३२ ॥

मतिनिर्जितगीष्पतौ परं *धृतिमान् रङ्गमहीपतौ धुरम् ।
निपुणोऽतियशा निवेश्य तां निवृणोति स्म भुवः स हूणराट्॥३३

1. M. Letter missing here. Kṣitīśa referred to is the French Governor.

2. M. gap and corruption here.

को. टि.

* P. धृतिः प्रीतिः ।

संस्कर्तुष्टीका

मया ईदृक् यशोमहत्त्वं संमानं सौख्यं चेत्यन्वयः ॥३२॥ मतीति । गीष्पतिः बृहस्पतिः । तां भुवो धुरम् इति अन्वयः । निवृणोति स्म कार्येभ्यो व्यरमत्॥ ३३ ॥ जनतेति पद्यमिदं कोशस्थटिप्पणीमनुसृत्य व्याख्यायते । तदा जनता बुधजनसमूहः, कीदृशी जनता, गुरुणा बृहस्पतिना विनुता स्तुता अगुरुणा गन्धद्रव्येण उल्लसिताः गुरुणाः संपन्ना उणाः ज्ञानिनश्च मुदमगुः । अपि च रङ्गमहीप्रभुणा, कीदृशेन, सुभृता सुष्ठुभृता असुभृतः प्राणिनः येन तेन सुभृतासुभृता, सुभृता शोभनभटयुक्तेन च । सुभृता सुरक्षिता भूरपि

जनता विनुता मुदमुल्लसितागुरुणा गुरुणा गुरुणागुरुणाः ।
अपि भूरपि रङ्गमहीप्रभुणा सुभृतासुभृता सुभृता सुभृता* ॥३४॥
प्रशासतः क्षमामतिक्षमामतिप्रभावतः ।
यशो जनाः समन्ततः समं ततः श्रिया जगुः ॥ ३५ ॥
[1]उपेयिवान् महानयं महानयं जनान्नयन् ।
ररक्ष वै स भासुरान् सभासुरानिव स्वराट् ॥ ३६ ॥

1. P. This verse occurs befoer प्रशासतम् .

को. टि.

* M. गुरुणा बृहस्पतिना.....नुताः स्तुता बुद्धिकौशल्यवशादिति भावः । अगुरुणा चन्दनेन उल्लसिता सुन्दरा । धम्मिल्लो धम्मल्ल इतिवत् अगरुरगुरुरिति च दृश्यते । गुरुणाः गुर्व्यो बह्वो णाः धेनवः यासां ताः गुरुणाः सम्पन्ना इत्यर्थः । उणा आत्मज्ञ निनश्च सौम्या ज... ....भा मुमं (दं) सतोषमगुः प्राप्ताः । अपि चामुना रङ्गप्रभुणा सुभृताः अतिशयेन पोषिताः असुभृतः प्राणिनो येन स सुभृतासुभृत् तथोक्तेन । शोभना भृतः भटाः यस्य स सुभृत् । भूयन्ने ? इति व्युत्पत्त्या भृन्छब्दस्तक ? एवंभूतेन सु सुष्ठु भृता रक्षिता भूरपि मुदमगादिति विभक्तिव्यत्ययेनान्वयः ।

संस्कर्तुष्टोका

मुदम् अगात् ॥३४॥ प्रशासत इति । अतिक्षमा-मति-प्रभावतः क्षान्तिबुद्धि-आतिशयमहिम्ना क्षमां भूमिं प्रशासतः पालयतः ततः तस्य आनन्दरङ्गस्य समन्ततः सर्वदिक्षु यशः श्रिया समं जना जगुः ॥ ३५ ॥ उपेयिवानिति । महान् अयं स रङ्गप्रभुः महानयं महतीं नीतिमुपेयिवान् आश्रयमाणः भासुरान् संपन्नत्वेन सश्रीकान् जनान् नयन् तन्नेतृत्वेन वर्तमानः ररक्ष वै । सभासुरान् भासहितसुरान् स्वराडिन्द्र इवेत्युपमा ॥ ३६ ॥ अथेति । आर्यानुकूलं पावर्त्यनुकूलम् आर्यजनानुकूलं च ।

अथ पुनरित्थमन्वहमार्यानुकूलमप्रतिहत(?)[1]...र्यं(ताहार्य ?) शासनम् ईशानमिमं राजशेखरं निरन्तरसुविहितनिखिलप्रजाकुशल-कृत्यं कृत्यविदामग्रगण्यम् ([2]अगण्य)महिमानम्[3] [4]अनलसमनसमन-लसमानस्वतेजोभिः प्रभवमिव सौभाग्यस्य, वसतिमिव [5]श्रुतस्य, प्रसूतिभवनमिव शीलस्य, वरमिवाभिजातं विद्याजनीनाम्, अनाश्रि-तम् अविद्यास्मितारागद्वेषाभिनिवेशैः, अनितरसाधारणसौजन्यधन्यं वदान्यमूर्धन्यम् अखिलकल्याणास्पदं कल्याणाचलमिव मघवद्गुरु-कवि[6]प्रमुखाभिरूपविलसद्विबुधालयं मलयमहीधरमिव महाभोगि-समुदयानुसृतभद्रश्रियं गुणतः[7] [8]सर्वतः प्रतीतं प्रतीतमनसमखिल-

---

1. M. P. gap here. 2. M. अस्य P. अरुण्य
3. M. gap here.
4. M. P. corrupt from अनलस to तेजोभिः
5. M. भूतस्य 6. 7. 8. M. gap here.

---

संस्कर्तुष्टीका

अप्रतिहतम्-अहार्यं च शासनं आज्ञा यस्य तम्; अप्रतिहतम् अहार्यं मेरुपर्वतरूपं शासनं दण्डकरणभूतं धनुर्यस्य तम् शिवम्, ईशानं शिवं ईशितारं च । राजशेखरं चन्द्रमौलिं, राजमान्यं च । अनलसमनसम् आलस्यहीनमानसम् ; अनलसमानस्वतेजोभिरग्नितुल्यकान्तिभिः । विद्याजनीना विद्यावधूनाम् अभिजातं वरमिव । अविद्या, अस्मिता अहं-कारः, रागः, द्वेषः, अभिनिवेशः इति पतञ्जलिना प्रोक्ताः पञ्च क्लेशाः (योगसूत्रेषु २०३), तैरनाश्रितम् । कल्याणाचलः मेरुः । मघवा इन्द्रः गुरुः बृहस्पतिः कविः ब्रह्मा एतदादिभिः अभिरूपैः मनोज्ञरूपैर्विकसतां विलसतां विबुधानामालयम् । मघवतां याज्ञिकानां गुरूणां कवीनां प्रमुखाणां प्रकृष्टमुखानां वाग्मिनाम् इति यावत्, तादृशाभिरूपाणां विदुषां विलसद्विबुधानां

युवतिजनमोहनमनसिजाभिरूपनिजाङ्गं वजारतरायविजयानन्द-रङ्गम्, अहर्निशमश्रान्तविचित्रोच्चावचविश्वसृष्टयभिनिविष्टमनस्कतया सन्ततश्रुतिपरंपरापरिशीलनपरा[1](पार) वश्याच्च कदा[2](चिदप्य-नव) लोकितात्मभूविलासं नित्यसंनिहितशुचिहृद्द्विजातिकृतसंसर्गं सरोषमपहाय[3] चतुर्मुखमपि [4]अङ्गीकृतविमुखभावम्, अवतीर्य तदीयविष्टपादवनितलम्, [5]अष्टाष्टककलाकौशलप्रकटनविधित्सयेव सकलकलारसिकमनुकूलं प्रियतमा मृगयन्ती सरस्वती सुरवारसु-[6]दृगुर्वशी पुरूरवसमिव प्रहृष्टमनाः सुतरामुपतस्थे ॥

1. 2. M. P. gaps here. 3. M. corrupt here.
4. 5. M. gaps here. 6. M. gap and corruption here.

संस्कर्तुष्टीका

पाण्डितानां च आलयम्। महाभोगिनः बृहत्सर्पाः महाभोगशालिनश्च। भद्राश्रियम्, भद्रश्रीः चन्दनम्, भद्रा श्रीः यस्य तम्। सर्वतः प्रतीतं ख्यातम्। प्रतीतमनसं हृष्टमानसम्।

अहर्निशमित्यादिना सरस्वत्याः ब्रह्मत्यागपूर्वम् आनन्दरङ्गोपस्थानस्य हेतवः प्रतिपाद्यन्ते। आत्मभूविलासः मन्मथविलासः। स अश्रान्तविश्वसृष्टि-व्यापारेण, श्रुतिपरिशीलनव्यग्रतया च उपरुद्धः। श्रुतिर्वेदः। नित्यसन्नि-हिताः शुचिहृदः शुद्धमानसाः, कामवासनारहिता इति यावत्। तादृशाद्विजा-तयो ब्राह्मणाः। तैः कृतसंसर्गम् इति अपरश्च विरागहेतुः। ऐभिः हेतुभिः अङ्गीकृतविमुखभावं सरस्वतीविषये स्वीकृतवैमुख्यं चतुर्मुखमपि सरोषं यथा तथा अपहाय। तदीयविष्टपाद् ब्रह्मलोकात्। अष्टाष्टककलाः चतुष्षष्टिकलाः।

लक्ष्म्या रङ्गमुपेत्य सा तु सततं साहित्यमातन्वती
नृत्यन्ती ललितातिकोमलपदस्या([1]न्यासा) धृतालङ्कृतिः ।
नानादेशिकसत्कृतिस्तुतकलापूर्णा सुवर्णाकृति-
र्बालावद्विलसद्रसा विजयते सानन्दमुर्व्यामिमम् ॥३७॥

नृत्यद्भर्गकिरीटकोटितटिनीवाचालवीचीसखै-
र्नित्यश्रीः सुमनोमनांसि सुखयन् वाचां विलासैर्मुहुः ।

1. M. P. corrupt here.

संस्कर्तुष्टीका

तत्प्रकटनेच्छया तासु रसिकमानन्दरङ्गम् । सुरवारसुदृग् देववाराङ्गना उर्वशी पुरूरवसमिव । प्रियतमा सरस्वती अनुकूलं नायकं मृगयन्ती आनन्दरङ्ग-मुपतस्थे । सेवितुमाजगाम ॥ लक्ष्म्येति । लक्ष्म्या सह सा सरस्वती । साहित्यं नेतुः आनन्दरङ्गस्य स्तुतिरूपं काव्यबन्धम् । अथवा लक्ष्म्या सहितभावम् । पदन्यासालंकृतिधारणादीनां नृत्ये काव्ये च अन्वयः । पदं पादः वाक्यगतं पदं च । अलंकृतिः कनकाद्याभरणम्, उपमाद्यलंकारश्च । नानादेशिकानां नानाचार्याणां सत्कृतिः सत्कारः, प्रशस्तः प्रबन्धो वा तया स्तुता या कला नृत्यरूपा, काव्यरूपा च, तया पूर्णा । सुवर्णाकृतिः वर्णः शरीरवर्णः, पदगताक्षराणि च । बालावद् युवतिवत् । रङ्गमुपेत्य रङ्गभूमिं, आनन्दरङ्गं च उपेत्य ॥ ३७ ॥ नृत्यदिति । भर्गः शिवः । तत्किरीटकोटि-तटिनी गङ्गा । तटिनी सरित् । वाचालाः मुखराः । तद्वीचिसदृशैः वाचां विलासैः । गङ्गाया देवनदीत्वात्तद्वीचीसखत्वमिन्द्रवाग्विलासे च युज्यते । सुमनसः साधवः देवाश्च । कविः कवयिता ब्रह्मा च । गुरुः आचार्यः बृहस्पतिश्च, तत्कृपाया आधारः पात्रभूतः । अथवा गुर्व्या

[1]अत्यन्तादृतसत्कविर्गुरुकृपाधारः सुधारोचनः
ख्यात्यायत्यनुरूपतो विजयतामानन्दरङ्गः क्षितौ* ॥

धन्यातिमान्यगुणमौक्तिकभूषिताङ्ग-
मानन्दरङ्गमधिकृत्य कृतिः कृतेयम् ।
अन्यादृशी गुणवती कुसुमस्रजेव
तन्यात्प्रमोदमनिशं सुदृशामवन्याम् ॥ ३९ ॥

[2]वरकविकुलमौलिस्फारमाणिक्यकान्ति-
द्युमणिकिरणपुञ्जप्रोल्लसत्पादपद्मः ।

1. M gap here. 2. M. पर

को. टि.

* M. P. अत्र "दा(स्त्रियां) क्षान्तिदानयोरिति नानार्थरत्नमाला" P. "वदान्यो वल्गुवचनः" इति च दृश्यमाना टिप्पणी ग्रन्थे कं स्थलविशेषं परामृशतीति न ज्ञायते ।

संस्कर्तुष्टीका

कृपाया आधारभूतः । सुधारोचनः सुधावत्प्रीत्युत्पादकः, सुधाशनश्च । आयतिः भविष्यत्कालः ॥ आनन्दरङ्गस्य इन्द्रेण साम्यं ध्वन्यते ॥ ३८ ॥ धन्येति । कुसुमस्रजेव स्रगेव स्रजा भागुरिमतेन । सुदृशां प्रेक्षावतां, सुन्दरीणां च ॥ ३९ ॥

वरकवीति कविपितुः स्तुतिः ॥ ४० ॥ आनन्दरङ्गविजय इति कविनामग्रन्थविरचनकालयोः कथनम् । तिष्याब्देषु कलिवर्षेषु ॥ ४१ ॥ मङ्गलेति । सर्वमङ्गला पार्वती ।

निखिलनिगममूर्तिस्फूर्तिरीशस्य साक्षा-
ज्जयति जगति तातो यस्य गङ्गाधरार्यः ॥ ४० ॥

आनन्दरङ्गविजयः सानन्दं वामदेवगणितेषु (४८५४) ।
तिष्याब्देषु गतेषु ग्रथितः श्रीश्रीनिवासविबुधेन ॥ ४१ ॥

इति श्रीवत्सकुल[1]तिलकायमानश्रीगङ्गाधराध्वरीन्द्रसुधाब्धिसुधा-
करेण श्रीपार्वतीगर्भसंभवेन श्रीनिवासकविना विरचिते
श्रीमदानन्दरङ्गविजये चम्पूकाव्ये
अष्टमः स्तबकः ॥

[2]मङ्गलायतनसर्वमङ्गलानायकस्त्रिदिवनायकार्चितः ।
भक्तचित्तकृतनित्यसन्निधिर्मङ्गलं दिशतु मङ्गलेश्वरः ॥

॥ समाप्ता चानन्दरङ्गविजयचम्पूः ॥

---

1. P. तिलक
2. P. has this verse at the beginning of the work.

---

संस्कर्तुष्टीका

कोशद्वयं चरित्रं च परीक्ष्य सह टीकया ।
आनन्दङ्गविजयं राघवः समपादयत् ॥

इति आनन्दरङ्गविजयचम्प्वाः संस्कर्तू राघवशर्मणष्टीकायाम्
अष्टमस्तबकटीका ॥

---

Printad at the M.L.J. Press, Mylapore, Madras—MS. 76.